5 0 6

# स्तोत्ररत्नमाला

श्रीमन्निगमान्तमहादेशिक विरचित

स्तोत्रजालरूपः

## द्वि ती यो भा गः

श्रीमन्महीशूरराजधान्यां विद्योतमान श्रीब्रह्मतन्त्र स्वतन्त्र परकालास्थान्य।

(३३) तमे पदे मूर्धाभिषिक्तैः

श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथ

ब्रह्मतन्त्रपरकालमहादेशिकैः (शा.१८३९)–तमे–प्रतिष्ठापितया

श्रीमद्वेदान्तदेशिकविहारसभया मुद्रयित्वा

प्रकाशिता

विजयसंवत्सरपौषमासे १९५४

# स्तोत्ररत्नमाला

श्रीमन्निगमान्तमहादेशिक विरचित

स्तोत्रजालरूपः

## द्वि ती यो भा गः

श्रीमन्महीशूरराजधान्यां विद्योतमान श्रीब्रह्मतन्त्र स्वतन्त्र परकालास्थान्यां

(३३) तमे पदे मूर्धाभिषिक्तैः

श्रीलक्ष्मीहयग्रीवदिव्यपादुकासेवक श्रीमदभिनवरङ्गनाथ

ब्रह्मतन्त्रपरकालमहादेशिकैः (शा. १८३९)–तमे–प्रतिष्ठापितया

श्रीमद्वेदान्तदेशिकविहारसभया मुद्रयित्वा

प्रकाशिता

विजयसंवत्सरपौषमासे १९५४

## विषयसूची

श्रीमते रामानुजाय नमः ।

श्रीमते निगमान्त महादेशिकाय नमः ।

श्रीमत्कविकथक कण्ठीरव श्रीनिगमान्तमहादेशिक विरचित

# श्री ह य ग्री व स्तो त्र म् ।

श्रीमान् वेङ्कटनाथार्यः कवितार्किक केसरी ।
वेदान्ताचार्य वर्यो मे सन्निधत्तां सदा हृदि ॥

ज्ञानानन्दमयं देवं निर्मलस्फटिकाकृतिम् ।
आधारं सर्वविद्यानां हयग्रीवमुपास्महे ॥ १

स्वतस्सिद्धं शुद्धस्फटिकमणि भूभृत्प्रतिभटं
सुधासध्रीचीभिः द्युतिभि रपताप त्रिभुवनम् ।
अनन्तैस्त्रय्यन्तै रनुविहित हेषाहलहलं
हताशेषावद्यं हयवदनमीडीमहि महः ॥ २

समाहार स्साम्नां प्रतिपदमृचां धाम यजुषां
लयः प्रत्यूहानां लहरिविततिः बोधजलधेः ।
कथादर्प क्षुभ्यत्कथककुल कोलाहलभवं
हरत्वन्तर्ध्वान्तं हयवदन हेषाहलहलः ॥ ३

प्राची सन्ध्या काचिदन्तर्निशायाः प्रज्ञादृष्टेरञ्जन श्रीरपूर्वा ।
वक्त्री वेदान् भातु मे वाजिवक्त्रा वागीशाख्या वासुदेवस्य मूर्तिः ॥ ४

विशुद्धविज्ञानघनस्वरूपं विज्ञानविश्राणन बद्धदीक्षम् ।
दयानिधिं देहभृतां शरण्यं देवं हयग्रीवमहं प्रपद्ये ॥ ५

अपौरुषेयैरपि वाक्प्रपञ्चै रद्यापि ते भूतिमदृष्टपाराम् ।
स्तुवन्नहं मुग्ध इति त्वयैव कारुण्यतो नाथ कटाक्षणीयः ॥ ६

दाक्षिण्यरम्या गिरिशस्य मूर्तिः देवी सरोजासनधर्मपत्नी ।
व्यासादयोऽपि व्यपदेश्यवाचः स्फुरन्ति सर्वे तव शक्तिलेशैः ॥ ७

मन्दोऽभविष्यन्नियतं विरिञ्चिः वाचांनिधे वञ्चितभागधेयः ।
दैत्यापनीतान् दययैव भूयोऽप्यध्यापयिष्यो निगमान्नचेत्त्वम् ॥ ८

वितर्कडोळां व्यवधूय सत्वे बृहस्पतिं वर्तयसे यतस्त्वम् ।
तेनैव देव त्रिदशेश्वराणां अस्पृष्ट डोळायितमाधिराज्यम् ॥ ९

अग्नौ समिद्धार्चिषि सप्ततन्तोरातस्थिवान् मन्त्रमयं शरीरम् ।
अखण्डसारै हविषां प्रदानै राप्यायनं व्योमसदां विधत्से ॥ १०

यन्मूलमीदृक् प्रतिभाति तत्त्वं या मूलमाम्नायमहाद्रुमाणाम् ।
तत्त्वेन जानन्ति विशुद्ध सत्वाः तामक्षरामक्षरमातृकां ते ॥ ११

अव्याकृतात् व्याकृतवानसि त्वं नामानि रूपाणि च यानि पूर्वम् ।
शंसन्ति तेषां चरमां प्रतिष्ठां वागीश्वर त्वां त्वदुपज्ञवाचः ॥ १२

मुग्धेन्दुनिष्यन्दविलोभनीयां मूर्तिं तवानन्दसुधाप्रसूतिम् ।
विपश्चितश्चेतसि भावयन्ते वेलामुदारामिव दुग्धसिन्धोः ॥ १३

मनोगतं पश्यति यस्सदा त्वां मनीषिणां मानसराजहंसम् ।
स्वयं पुरोभावविवादभाजः किङ्कुर्वते तस्य गिरो यथार्हम् ॥ १४

अपि क्षणार्धं कलयन्ति ये त्वामाप्लावयन्तं विशदै मयूखैः ।
वाचां प्रवाहैरनिवारितैस्ते मन्दाकिनीं मन्दयितुं क्षमन्ते ॥ १५

स्वामिन् भवद्ध्यानसुधाभिषेकात् वहन्ति धन्याः पुलकानुबन्धम् ।
अलक्षिते क्वापि निरूढमूलं अङ्गेष्विवानन्दथुमङ्कुरन्तम् ॥ १६

स्वामिन् प्रतीचा हृदयेन धन्याः त्वद्ध्यानचन्द्रोदयवर्धमानम् ।
अमान्तमानन्दपयोधिमन्तः पयोभिरक्ष्णां परिवाहयन्ति ॥ १७

स्वैरानुभावास्त्वदधीनभावाः संरुद्धवीर्यो त्वदनुग्रहेण ।
विपश्चितो नाथ तरन्ति मायां वैहारिकीं मोहनपिञ्छिकां ते ॥ १८

प्राङ्निर्मितानां तपसां विपाकात्प्रत्यग्रनिश्श्रेयससम्पदो मे ।
समेधिषीरंस्तव पादपद्मे सङ्कल्पचिन्तामणयः प्रणामाः ॥ १९

विलुप्तमूर्धन्यलिपि क्रमाणां सुरेन्द्रचूडापद लालितानाम् ।
त्वदङ्घ्रिराजीव रजःकणानां भूयान् प्रसादो मयि नाथ भूयात् ॥ २०

परिस्फुरन्नूपुरचित्रभानुप्रकाशनिर्धूत तमोऽनुषङ्गाम् ।
पदद्वयीं ते परिचिन्महेऽन्तः प्रबोधराजीव विभातसन्ध्याम् ॥ २१

त्वत्किङ्करालङ्करणोचितानां त्वयैव कल्पान्तरपालितानाम् ।
मञ्जुप्रणादं मणिनूपुरं ते मञ्जूषिकां वेदगिरां प्रतीमः ॥ २२

संचिन्तयामि प्रतिभादशास्थान् संधुक्षयन्तं समयप्रदीपान् ।
विज्ञानकल्पद्रुम पल्लवाभं व्याख्यानमुद्रा मधुरं करं ते ॥ २३

चित्ते करोमि स्फुरिताक्षमालं सव्येतरं नाथ करं त्वदीयम् ।
ज्ञानामृतोदञ्चनलालसानां लीलाघटीयन्त्रमिवाश्रितानाम् ॥ २४

प्रबोधसिन्धोररुणैः प्रकाशैः प्रवाळसङ्घातमिवोद्वहन्तम् ।
विभावये देव सपुस्तकं ते वामं करं दक्षिणमाश्रितानाम् ॥ २५

तमांसि भित्त्वा विशदैर्मयूखैः सम्प्रीणयन्तं विदुषश्चकोरान् ।
निशामये त्वां नवपुण्डरीके शरद्घने चन्द्रमिव स्फुरन्तम् ॥ २६

दिशन्तु मे देव सदा त्वदीयाः दयातरङ्गानुचराः कटाक्षाः ।
श्रोत्रेषु पुंसाममृतं क्षरन्तीं सरस्वतीं संश्रितकामधेनुम् ॥ २७

विशेषवित्पारिषदेषु नाथं विदग्धगोष्ठी समराङ्गणेषु ।
जिगीषतो मे कवितार्किकेन्द्रान् जिह्वाग्रसिंहासनमभ्युपेयाः ॥ २८

त्वां चिन्तयंस्त्वन्मयतां प्रपन्नः त्वामुद्गृणन् शब्दमयेन धाम्ना ।
स्वामिन् समाजेषु समेधिषीय स्वच्छन्दवादाहवबद्धशूरः ॥ २९

नानाविधानामगतिः कलानां नचापि तीर्थेषु कृतावतारः ।
ध्रुवं तवानाथपरिग्रहायाः नवं नवं पात्रमहं दयायाः ॥ ३०

अकम्पनीयान्यपनीतिभेदैः अलंकृषीरन् हृदयं मदीयम् ।
शङ्काकळङ्कापगमोज्वलानि तत्त्वानि सम्यञ्चि तव प्रसादात् ॥ ३१

व्याख्यामुद्रां करसरसिजैः पुस्तकं शङ्खचक्रे
बिभ्रद्भिन्नस्फटिकरुचिरे पुण्डरीके निषण्णः ।

अम्लानश्रीरमृतविशदै रंशुभिः प्लावयन्मां
आविर्भूयादनघमहिमा मानसे वागधीशः ॥ ३२

वागर्थसिद्धिहेतोः पठत हयग्रीवसंस्तुतिं भक्त्या ।
कवितार्किककेसरिणा वेङ्कटनाथेन विरचितामेताम् ॥ ३३

—:*:—

इति कवितार्किकसिंहस्य सर्वतन्त्रस्वतन्त्रस्य
श्रीमद्वेङ्कटनाथार्यस्य कृतिषु
श्रीहयग्रीवस्तोत्रं सम्पूर्णम् ॥

कवितार्किक सिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

॥ श्रीः ॥

## श्री गरुडदण्डकः

—:*:—

श्रीमान् वेङ्कटनाथार्यः——सन्निधत्तां सदा हृदि ॥

नमः पन्नगनद्धाय वैकुण्ठवशवर्तिने ।
श्रुतिसिन्धुसुधोत्पादमन्दराय गरुत्मते ॥

गरुडमखिलवेदनीडाधिरूढं द्विषत्पीडनोत्कण्ठिताकुण्ठवैकुण्ठपीठीकृतस्कन्धमीडे स्वनीडागतिप्रीत रुद्रासुकीर्तिस्तनाभोग गाढोपगूढ स्फुरत्कण्टकव्रात वेधव्यथावेपमान द्विजिह्वाधिपाकल्प विष्फार्यमाण स्फटावाटिकारत्नरोचिश्छटाराजिनीराजितं कान्तिकल्लोलनीराजितम् ॥ १

जय गरुड सुपर्ण दर्वीकराहार देवाधिपाहारहारिन् दिवौकस्पतिक्षिप्तदंभोळिधाराकिणाकल्प कल्पान्तवातूलकल्पोदयानल्प वीरायितोद्यच्चमत्कार दैत्यारि जैत्र

ध्वजारोह निर्धारितोत्कर्षसङ्कर्षणात्मन् गरुत्मन् मरुत्पञ्चकाधीश सत्यादिमूर्ते न कश्चित् समस्ते नमस्ते पुनस्ते नमः ॥　　२

नम इदमजहत्सपर्याय पर्यायनिर्यातपक्षानिलास्फालनोद्वेलपाथोधिवीचीचपेटाहताधातपातालभांकारसंक्रुद्ध नागेन्द्रपीडासृणीभाव भास्वन्नखश्रेणये चण्डतुण्डाय नृत्यद्भुजङ्गभ्रुवे वज्रिणे दंष्ट्रया तुभ्यमध्यात्मविद्याविधेया विधेयो भवद्दास्य मापादयेथाः दयेथाश्च मे ॥　　३

मनुरनुगत पक्षिवक्त्रस्फुरत्तारकस्तावकश्चित्रभानुप्रियाशेखरस्त्रायतां नस्त्रिवर्गापवर्गप्रसूतिः परव्योमधामन् वलद्वेषिदर्पज्वलद्वालखिल्यप्रतिज्ञावतीर्ण स्थिरां तत्त्वबुद्धिं परां भक्तिधेनुं जगन्मूलकन्दे मुकुन्दे महानन्ददोग्ध्रीं दधीथा मुधा कामहीनामहीनामहीनान्तक ॥　　४

षट्त्रिंशद्गणचरणो नरपरिपाटी नवीनगुम्भगणः (गुणः) ।
विष्णुरथदण्डकोऽसौ विघटयतु विपक्षवाहिनीव्यूहम् ॥

विचित्रसिद्धिदस्सोऽयं वेङ्कटेशविपश्चिता ।
गरुडध्वजतोषाय गीतो गरुडदण्डकः ॥

इति कवितार्किकसिंहस्य—कृतिषु

गरुडदण्डकस्सम्पूर्णः ॥

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

॥ श्रीः ॥

# अच्चुअसअअम् ॥

## अच्युतशतकम् ॥

सिरिवेङ्कटणाहज्जो कइतक्किअसिंहसव्वतन्त सतन्तो ।
वेअंतारिअवज्जो महं सण्णिज्झेउ सइ सअ हिअअम्मि ॥

छाया ॥ श्रीवेङ्कटनाथार्यः कवितार्किकसिंहसर्वतन्त्र स्वतन्त्रः ।
वेदान्तार्यवर्यो मम संन्निधत्तां सदा स्वयं हृदये ॥

णमह तिअसाण णाहं सच्चं दासाण अच्चुअं ठिरजोइम् ।
गलुडणइ तडतमालं अहिन्दणअरोसहायलेक्कगइन्दम् ॥
नमत त्रिदशानां नाथं सत्यं दासानांमच्युतं स्थिरज्योतिम् ।
गरुडनदी तटतमालं अहीन्द्रनगरौषधाचलैक गजेन्द्रम् ॥ १

किङ्करसच्च थुई तुह सअंभुगेहिणी विलासवाहित्तिमई ।
फणिआ बाळेण मए पंजरसुअजप्पिअं व कुणउ पसाअम् ॥
किङ्करसत्यस्तुतिस्तव स्वयम्भुगेहिनी विलासव्याहृतिमयी ।
फणिता बालेन मया पञ्जरशुकजल्पितमिव करोतु प्रसादम् ॥ २

मलिणं वि भासिअं मह किंकरसच्च तुह कित्तिजोण्णापसरे ।
लग्गं लहउ विसुद्धिं रच्छासळिळं व तिवहआसोत्तगअम् ॥
मलिनमपि भाषितं मम किंकरसत्य तव कीर्तिज्योत्स्नाप्रसरे ।
लग्नं लभतां विशुद्धिं रथ्यासलिलमिव त्रिपथगास्रोतोगतम् ॥ ३

तत्थरिणएण ठविआ सोहउ तिअसाणणाह तुज्झ समाए ।
वंदित्तणमहिआणं मज्झम्मि सुईण बालिसा मज्झ थुई ॥

त्रस्तारि नयेन स्थापिता शोभतां त्रिदशानां नाथ तव समाजे ।
वंदित्वमहितानां मध्ये श्रुतीनां बालिशा मम स्तुतिः ॥ ४

अम्हगुरूणां अच्चुअ जीहासीहासणम्मि लद्धपडिट्ठो ।
पडिवाइअ परमट्ठो वारेसि अपंडिअत्तणमम्हाणम् ॥
अस्मद्गुरूणामच्युत जिह्वासिंहासने लब्धप्रतिष्ठः ।
प्रतिपादितपरमार्थो वारयस्यपण्डितत्वमस्माकम् ॥ ५

हिअएसु देसिआणं जण्हइल्हरीसु पुण्णचंदोव्व फुडो ।
कलुसजलेसु व हंसो कसाअकबुरेसु ठाइ अच्चुअ ण खणम् ॥
हृदयेषु देशिकानां जाह्नवीलहरीषु पूर्णचन्द्र इव स्फुटः ।
कलुषजलेष्विव हंसः कषायकर्बुरेषु तिष्ठस्यच्युत न क्षणम् ॥ ६

आअममेत्तपमाणो आगोविअणं पआसिणिअमाहप्पो ।
सद्धहिअ हिअअसुलहो दूरं मुअसि णअसच्च डोळाअंते ॥
आगममात्रप्रमाण आगोपीजनं प्रकाशनिजमाहात्म्यः ।
श्रद्धधद्धृदयसुलभो दूरं मुञ्चसि नतसत्यडोलायमानान् ॥ ७

संखविअ सअलहेअं सरणागअसच्च सच्चणाणाणंदम् ।
उल्लंघिअतिविहंतं उवणिसआणं सआइ गाअंति तुमम् ॥
संक्षपितसकलहेयं शरणागतसत्य सत्यज्ञानानन्दम् ।
उल्लंघितत्रिविधान्तमुपनिषदां शतानि गायन्ति त्वाम् ॥ ८

कुणसि ण कीरसि केण वि ठावेसि ण संठविज्जसि अणण्णाठिओ ।
हरसि णिहिलं ण हीरसि अहिंदणअरेंदअणहजोइ पुरंतो ॥
करोषि न क्रियसे केनापि स्थापयसि न संस्थाप्यसेऽनन्यस्थितः ।
हरसि निखिलं न ह्रियसे अहीन्द्रनगरानघज्योतिः स्फुरन् ॥ ९

अणुपमिअस्स वि अच्चुअ सत्ती तुह सअलधारणाइपउत्ता ।
तेण पडिवत्थुपुण्णो सुव्वसि अपडिहअणिअटिई सव्वगओ ॥
अणुप्रमितस्याप्यच्युत शक्तिस्तव सकलधारणादिप्रयुक्ता भूता ।
तेन प्रतिवस्तुपूर्णश्श्रूयसेऽप्रतिहतनिजस्थितिस्सर्वगतः ॥ १०

सअळाण धरणणिअमणसामित्तणणिअमसंठिओ सव्वतणू ।
सुव्वसि अच्चुअ सव्वो सअदंसिअ कज्जकारत्तणकब्बुरो ॥
सकलानां धरणनियमनस्वामित्वनियमसंस्थितस्सर्वतनुः ।
श्रूयसेऽच्युत सर्वस्स्वयंदर्शितकार्यकारणत्वकर्बुरः ॥ ११

पुरिसपहाणसरीरो भुवणाणं होसि अच्चुअ उवाआणम् ।
णिअसंकप्पसणाहो वहसि णिमित्तत्तणं वि अब्भुअसत्ती ॥
पुरुषप्रधानशरीरः भुवनानां भवस्यच्युतोपादानम् ।
निजसङ्कल्पसनाथो वहसि निमित्तत्वमप्यद्भुतशक्तिः ॥ १२

विसमगुणंकुरपअरे जलं व सामण्णकालणं तुह केळी ।
णिअकम्मसत्तणिअआ अच्चुअ बम्हाइठावरंतविसेसा ॥
विषमगुणाङ्कुरप्रकरे जलमिव सामान्यकारणं तव केळिः ।
निजकर्मशक्तिनियता अच्युत ब्रह्मादिस्थावरान्तविशेषाः ॥ १३

पुरिसा तुज्झ विहूई अच्चुअ लच्छीअ इत्थिआसण्णाओ ।
णत्थि परं तुज्झाणं सा वि सिरी होइ तुज्झ किं उण इअरम् ॥
पुरुषास्तव विभूतिरच्युत लक्ष्म्यास्स्त्रीसंज्ञाः ।
नास्ति परं युवाभ्यां सापि श्रीर्भवति तव किं पुनरितरत् ॥ १४

णखु तुह सरिसब्भहिआ णाह तुमं एव्व सव्वलोअसरण्णो ।
एआवणाणसारं अमुणिउण्णाउं तिअसणाहइअरविइंता ॥
न खलु तव सदृशाभ्यधिका नाथ त्वमेव सर्वलोकशरण्यः ।
एतावज्ज्ञानसारमिति ज्ञातुं त्रिदशनाथेतराविचिन्ता ॥ १५

भाइ फणिंदपुराहिव पडिवालं तेसु पाअडपहुत्तफला ।
अवि दुहिणपमुहेहिं आणत्ती तुह अलंघणीअ पहावा ॥
भाति फणीन्द्रपुराधिप प्रतिपालयत्सु प्रकटित प्रभूतफला ।
अपि द्रुहिणप्रमुखैराज्ञप्तिस्तवालङ्घनीयप्रभावा ॥ १६

णिअमविहीण पउत्ती सव्वाण वि दाससच्च उद्दिसिअ तुमम् ।
सद्धणिमंतिअब्रंहणसमाहिसिद्धं लहंति तिअसा भुक्तिम् ॥

नियमविधीनां प्रवृत्तिस्सर्वेषां दाससत्योद्दिश्यत्वाम् ।
श्राद्धनिमन्त्रितब्राह्मणसमाधिसिद्धां लभन्ते त्रिदशा भुक्तिम् ॥ १७

आरज्झ तिअसविळए अचुअ णिच्चं ण ठासि जइ णाम तुमम् ।
कम्माण कप्पिआणं काहिअ कप्पन्तरेसु को णिव्वेसम् ॥
आराध्य त्रिदशविलयेऽच्युत नित्यं न तिष्ठसि यदि नाम त्वम् ।
कर्मणां कल्पितानां करिष्यति कल्पान्तरेषु को निर्वेशम् ॥ १८

कप्पेसि कङ्खिआइं कप्पदुमो व्व सिरिकंचणलआसहिओ ।
णअसच्च सइफलाइं णिअछाहिणिहिण्ण णिच्चतावतिहुवणो ॥
कल्पयसि कांक्षितानि कल्पद्रुम इव श्रीकाञ्चनलतासहितः ।
नतसत्य सदाफलानि निजच्छायानिर्भिन्ननित्यतापत्रिभुवनः ॥ १९

सअलाअमाण णिट्ठा सअलसुराणं वि अन्तरो अप्पाणो ।
सअलफलाणपसूई सअलजणाणं समो खु णअसच्च तुमम् ॥
सकलागमानां निष्ठा सकलसुराणामप्यन्तरआत्मा ।
सकलफलानां प्रसूतिः सकलजनानां समः खलु नतसत्य त्वम् ॥ २०

इअ सव्वाण समाणो सच्चठिओ दाससच्च सइ परिपुण्णो ।
किह वहसि पक्खवाअं पंडवपमुहेसु पेसणं वि सहंतो ॥
इति सर्वेषां समानः सत्यस्थितो दाससत्य परिपूर्णः ।
कस्माद्वहसि पक्षपातं पाण्डवप्रमुखेषु प्रेषणमपि सहन् ॥ २१

विसमम्मि कम्ममग्गे विपरिक्खलंताण वहिलिअकरणाणम् ।
णाह निहिळाण अण्णो णत्थि तुमाउ णअसच्च हत्थाळंवो ॥
विषमे कर्ममार्गे विपरिस्खलतां विह्वलितकरणानाम् ।
नाथ निखिलानामन्यो नास्तित्वन्नतसत्य हस्तालंबः ॥ २२

णाणस्सको अविसओ अच्चुअ कलुणाए तुज्झ को दूरठिओ ।
सत्तीअ को अइभरो ताखु उवाओ तुमं च्चिअसअंसिद्धो ॥
ज्ञानस्य कोऽविषयोऽच्युत करुणायास्तव को दूरस्थितः ।
शक्तेः कोऽतिभरस्तस्मात्खलूपायस्त्वमेवं स्वयंसिद्धः ॥ २३

संकप्पकण्णहारो किंकरसत्त भवसाअरे अइगहिरे ।
अणहो तुमं खु पोओ अप्पाण किवासमीरणेणपउत्तो ॥
सङ्कल्पकर्णधारः किंकरसत्त्व भवसागरेऽतिगभीरे ।
अनघस्त्वं खलु पोतः आत्मकृपासमीरणेन प्रयुक्तः ॥ २४

अच्चुअ ण दंति मोक्खं ईसरभावेण भविआ इअरसुरा ।
रत्तिं पडिवट्टेउं लक्खं आलेक्खदिणअराण वि ण खमम् ॥
अच्युत न ददति मोक्षं ईश्वरभावेन भाविता इतरसुराः ।
रात्रिं परिवर्तयितुं लक्षमालेख्यदिनकराणामपि न क्षमम् ॥ २५

अमिअरससाअरस्स व अहिंदपुरणाह णिम्मलमहग्घाइम् ।
तीरंति ण विगणेउं अणण्णसुलहाइ तुज्झ गुणरअणाइम् ॥
अमृतरससागरस्येव अहीन्द्रपुरनाथ निर्मलमहार्घाणि ।
तीर्यते न विगणयितुं अनन्यसुलभानि तव गुणरत्नानि ॥ २६

भूसिअ सुइसीमंतो भुअइंदउरेस सव्वगुणसीमंतो ।
खविअतिसामलमोहो मुणीण हिअएसु पुरसि सामलमोहो ॥
भूषितश्रुतिसीमन्तः भुजगेन्द्रपुरेश सर्वगुणसीमन्तः ।
क्षपिततृषामलमोहो मुनीनां हृदयेषु स्फुरसि श्यामलमयूखः ॥ २७

सुहलक्खण सिरिवच्छो सोहसि णिम्मुक्कविरहलक्खणसिरिवच्छो ।
रणदेवणसविहगओ उज्जलगरुडणईतीरवणसविहगओ ॥
शुभलक्षणश्रीवत्सः शोभसे निर्मुक्तविरहलक्षणश्रीवत्सः ।
रणदेवनसविधगतः उज्ज्वलगरुडनदीतीर सविभगजः ॥ २८

अउमारजौव्वणठिअं अहिंदउरणाह अहिमअं अणुरूअम् ।
णिच्चं सहावसिद्धं सुरवइसूरिमहिअं सुहं तुह रूअम् ।
अकुमारयौवनस्थितं अहीन्द्रपुरनाथमभिमतमनुरूपम् ।
नित्यं स्वभावसिद्धं भूपते सूरिमहितं शुभं तव रूपम् ॥ २९

तिउणं तस्स विआरा अच्चुअ पुरिसोत्ति आअमगिज्जंता
अट्ठा तुह खु समट्ठा परम्मि रूवम्मि भूसणत्थसरूवा ॥

त्रिगुणं तस्य विकाराः अच्युत पुरुष इत्यागमगणनीयाः ।
अर्थास्तव खलु समस्ताः परस्मिन् रूपे भूषणास्त्रस्वरूपाः ॥ ३०

णिंति तुमाओ अच्चुअ णिक्खविअ त्रिवक्खनिट्ठुरपरक्कमणा ।
संठविअपरमधम्मा साहुपरित्ताणसप्फला ओआरा ॥
निर्यान्ति त्वदच्युत निक्षपितविपक्षनिष्ठुरपराक्रमणाः ।
संस्थापितपरमधर्माः साधुपरित्राणसत्फला अवताराः ॥ ३१

हरिमणिसरिच्छणिअरुइ हरिआअंतभुअइंदपुरपेरंतो ।
काले दासअणाणं कह्नहणो होऽसि दिण्णकालुण्णरसो ॥
हरिमणिसदृक्षनिजरुचि हरितायमानभुजगेन्द्रपुरपर्यन्तः ।
काले दासजनानां कृष्णघनो भवसि दत्तकारुण्यरसः ॥ ३२

गलुलणइकच्छरण्णे लक्खिजसि लच्छिमहिकणेरुमणहरो ।
दीसंतबहुळदाणो दिसगाइंदोव्व तुडिअदणुइंददुमो ॥
गरुडनदीकच्छारण्ये लक्ष्यसे लक्ष्मीमहीकरेणुमनोहरः ।
दृश्यमानबहुळदानो दिशागजेन्द्र इव खंडितदनुजेन्द्रद्रुमः ॥ ३३

मुहअंदमउलिदिणअर मज्झठिओ तुज्झ चिहुरभारंधारो ।
अघडिअघडनासत्तिं सच्चण्ठावेइ दाससच्च समग्गम् ॥
मुखचन्द्र मौळिदिनकरमध्यस्थितस्तव चिकुरभारान्धकारः ।
अघटितघटनाशक्तिं सत्यंस्थापयति दाससत्य समग्राम् ॥ ३४

परिहासिअ पुण्णचन्दं पउमसरिच्छप्पसण्ण लोअणजुअळम् ।
सङ्कप्पिअदुरिआइंवि सह्मरिअं हरइ दाससच्च तुह मुहम् ॥
परिहासितपूर्णचन्द्रं पद्मसदृक्ष प्रसन्नलोचनयुगळम् ।
सङ्कल्पितदुरितान्यपि संस्मृतं हरति दाससत्यतवमुखम् ॥ ३५

माहप्पं तुहमहिअं मङ्गलिअं तुलसिकोत्थुहप्पमुहाणम् ।
अच्चुअ ठिरवणमालं वच्छं दंसेइ लच्छिलक्खणमुहअम् ॥
माहात्म्यं तव महितं माङ्गळिकं तुलसि कौस्तुभ प्रमुखानाम् ।
अच्युतस्थिरवनमालं वत्संवक्षो दर्शयति लक्ष्मी लक्षणसुभगम् ॥ ३६

णिव्विसइ णिन्ततावो देवअणो देवणाअअ विहिप्पमुहो ।
सीअळ सन्दवहुत्तं छाहिन्तुह विउलबाहुकप्पदुमाणम् ॥
निर्विशति नित्यतापो देवजनो देवनायक विधिप्रमुखः ।
शीतलसान्द्र प्रभूतां छायां तव विपुलबाहुकल्पद्रुमाणाम् ॥ ३७
सङ्कप्पचन्दखोहिअ तिउणोअहि विउलबुब्भुअप्पअरोहिम् ।
बम्हण्डेहि विभरिअं किङ्करसच्च तुह कीस णु किसंउअरम् ॥
सङ्कल्पचन्द्रक्षोभित त्रिगुणोदधिविपुल बुद्बुदप्रकरैः ।
ब्रह्माण्डैरपि भरितं किङ्करसत्य तवकस्मान्नु कृशमुदरम् ॥ ३८
णाहिरुहं तुह नळिणं भुअएसर णअरणाह सोणइ सुहअम् ।
मज्झठिअबम्हभमरं वच्छासण लच्छिपाअवीढसरिच्छम् ॥
नाभिरुहं तव नळिनं भुजगेश्वरनगरनाथ शोभते सुभगम् ।
मध्यस्थित ब्रह्मभ्रमरं वत्सासनलक्ष्मीपादपीठ सदृक्षम् ॥ ३९
दिढपीडिअ महुकयिढव सोणिअपलपरिपाडलम्बरघडिआ ।
राअइ अच्चुअ मुहला रइणाहगइन्दसिङ्खला तुह्मरसणा ॥
दृढपीडितमधुकैटभ शोणित पटलपरिपाटलाम्बरघटिता ।
राजतेऽच्युत मुखरा रतिनाथगजेन्द्र शृङ्खला तवरशना ॥ ४०
दासाण सच्च दीसइ दाणवीराण दीहणिद्दासअणम् ।
तुहउ अरठ्ठिअतिहुवणपासाअक्कम्भसच्छअं ऊरुजुअम् ॥
दासानां सत्य दृश्यते दानववीराणां दीर्घनिद्राशयनम् ।
तवोदर स्थितत्रिभुवन प्रासादस्तम्भसच्छायमूरुयुगम् ॥ ४१
जाणुमणिदप्पणेण अजङ्घामरगलकळाइआअअ धण्णिआ ।
अच्चुअणमुअइ कन्ती लच्छीव सरोअलच्छणे तुह चलणे ॥
जानुमणिदर्पणेन च जङ्घामरकत कळाचिकया च धन्या ।
अच्युत नमुञ्चतिकान्तिः लक्ष्मीरिव सरोजलांछनौ तवचरणौ ॥ ४२
सुइसीमन्तपसूणं सोहइ णअसच्च तुज्झसव्वसरणम ।
कमणक्खण जणिअ सुरणइ पनमिअ तेल्लोक्कपाअअं दअपउमम् ॥

श्रुतिसीमन्त प्रसूनं शोभते नतसत्य तवसर्वशरण्यम् ।
क्रमण क्षणजनित सुरनदी प्रशमित त्रैलोक्यपातकं पदपद्मम् ॥ ४३

इअ तिहुवणेक्कमूलं आसानन्ति अणहाऽमिअसाउरसम् ।
ओसहि महिहरपासे उइअं तुं ओरुहिं व दासरुअणम् ॥
इति त्रिभुवनैकमूलमास्वादयन्त्यनघा अमृत स्वादुरसम् ।
ओषधिमहीधर पार्श्वे उदितन्त्वामोषधिमिव दासरुजाम् ॥ ४४

सिद्धञ्जणं व सामं तुज्झतणुं णिअविलोअणेसु खिवन्ता ।
अच्चुअ लच्छिणिवासं णिच्च णिऊडं निहिं व पेच्छन्ति तुमम् ॥
सिद्धाञ्जनमिव श्यामां तव तनुं निजविलोचनेषु क्षिपन्तः ।
अच्युत लक्ष्मीनिवासं नित्यनिगूढं निधिमिव प्रेक्षन्ते त्वाम् ॥ ४५

विहडिअणिबिडन्धारो घडन्तजोई तिलोअएक्कगहवई ।
दिट्ठिगओ जाणुतुमं णमन्तसच्च णहुताण मोहतिआमा ॥
विघटितनिबिडान्धकारो घटमानज्योतिस्त्रिलोकैकग्रहपतिः ।
दृष्टिगतो येषां त्वं नमत्सत्य न खलुतेषां मोहत्रियामा ॥ ४६

विसअरसम्मि विरत्ता विआरजणणेहिवि णहुविकीरन्ता ।
जीवन्त मुक्कसरिआ अच्चुअदीसन्ति पावणा तुहभत्ता ॥
विषयरसे विरक्ताः विकारजननैरपि न खलु विक्रियमाणाः ।
जीवन्मुक्तसदृशा अच्युत दृश्यन्ते पावनास्तवभक्ताः ॥ ४७

गन्धव्वणअरसिविणअ सारिच्छाणं सिरीण वणसरिआणम् ।
णसुमरइ तुम्हगहिओ सरणागअसच्च सइमओ जीवगओ ॥
गन्धर्वनगरस्वप्नसदृक्षाणां श्रीणांवनसरितां ।
नस्मरति त्वद्गृहीतश्शरणागतसत्य सदामदो जीवगजः ॥ ४८

णमहेन्ति णाणवन्ता तरङ्ग डिण्डीरबुब्बुअसरिच्छाइम् ।
विहिपमुहाण पआइं घणकन्दलिकन्द कअलिकम्भसमाइम् ॥
नमहयन्तिज्ञानवन्त स्तरङ्गडिण्डीर बुद्बुदसदृक्षाणि ।
विधिप्रमुखानाम्पदानि घनकन्दलिकन्दकदली स्तम्भसमानि ॥ ४९

पुळइअ सपरसहावा पुरिसा घेत्तूण सामिणो तुहसीळम् ।
णाह णअसच्च सघिणा णमुअन्ति कहं वि सव्वजण सोहद्दम् ॥
दृष्टस्वपरस्वभावाः पुरुषागृहीत्वास्वामिन स्तवशीलम् ।
नाथ नतसत्य सघृणाः नमुञ्चन्ति कथमपि सर्वजनसौहार्दम् ॥ ५०
माणमएसामच्छर डंभासूयाभयामरिस लोहमोहमुहा ।
दीसंति ण मोहसुआ दोसा दासाणसच्च तुह भत्ताणम् ॥
मानमदेर्ष्यामत्सर दंभासूयाभयामर्षलोभमोहमुखाः ।
दृश्यन्ते न मोहसुता दोषा दासानां सत्य तव भक्तानाम् ॥ ५१
जाण मई इअरमुही कालो सअलो वि ताण कलिवित्थारो ।
जे तुह पअम्मिपवणा णत्थि कली णाअवइणअरवइ ताणम् ॥
येषां मतिरितरमुखी कालस्सकलोऽपि तेषां कलिविस्तारः ।
ये तव पदे प्रवणाः नास्ति कलिर्नागपतिनगरपते तेषाम् ॥ ५२
अच्चासण्णविणासा अच्चुअ पेक्खन्ति तावए भत्तजणे ।
मोक्खरुईणसुमेग्ग मूढा दिणअरमण्डलम्मि व छिद्दम् ॥
अत्यासन्नविनाशा अच्युत पश्यन्ति तावके भक्तजने ।
मोक्षरुचीनां सुमार्गे मूढा दिनकरमण्डल इव छिद्रम् ॥ ५३
णितुडिअदुह्माणघणा णिम्मळगुणघडिअतारआपब्भारा ।
भासन्तभत्तिजोह्ना णअसच्च फुरन्ति णहणिहातुहभत्ता ॥
निखण्डितदुर्मानघनाः निर्मलगुणघटित तारकाप्राग्भाराः ।
भासमानभक्तिज्योत्स्नाः नतसत्यस्फुरन्ति नभोनिभास्तवभक्ताः ॥ ५४
णहुजमविसअम्मि गई णअसच्च पअम्बुअं तुहपवण्णाणम् ।
खलिआणविजहजोग्गं सिक्खा सुद्धन्तकिङ्कराणव लहुई ॥
नखलु यमविषयेगतिः नतसत्य पदाम्बुजन्तव प्रपन्नानाम् ।
स्खलितानामपि यथायोग्यं शिक्षाशुद्धान्तकिङ्कराणामिव लघ्वी ॥ ५५
कम्ममअदोसदुहिआ कअन्तभिउडीभुअङ्गिदंसणतत्था ।
अचन्तितुज्झचलणे अचुअ पब्भट्ठवम्मह रसासाआ ॥

कर्ममयदोषदुःखिताः कृतान्तभ्रुकुटीभुजङ्गीदर्शनत्रस्ताः ।
अर्चयन्ति तव चरणौ अच्युतप्रभ्रष्टमन्मथरसास्वादाः ॥ ५६

आलग्गइ तुह चलणे अचुअ विहिणा वि अच्चणाँ आअरिआ ।
जा एक्कन्तिपउत्ता सेसं वँ सँअं सिरेण पडिगेह्णसि तम् ॥
आलगति तव चरणावच्युत विधिनाऽप्यर्चनाऽऽचरिता ।
यैकान्तिप्रयुक्ता शेषामिव स्वयं शिरसा प्रतिगृह्णासि ताम् ॥ ५७

तुह मुहजोह्णादाविअ माणससिअन्तपवहसण्णिहव्वाहे ।
अचुअ ण मुअसि भत्ते कअंबगोळणिहकण्टअन्तणिअङ्गे ॥
तव मुखज्योत्स्नाद्रावितमानसशशिकान्त प्रवाहसन्निभबाष्पान् ।
अच्युत न मुञ्चसि भक्तान् कदंबगोळकनिभकण्टकितनिजाङ्गान् ॥

सव्वेसु वि णिव्वेरा सरणागअसच्च गहिअ सासअधम्मा ।
गअसङ्गा तुहभत्ता जान्तितुमं एव्व दुल्लहंइअरेहिम् ॥
सर्वेष्वपि निर्वैराश्शरणागतसत्य गृहीतशाश्वतधर्माः ।
गतसङ्गास्तव भक्ता यान्ति त्वामेव दुर्लभमितरैः ॥ ५९

अहिवइणरेन्द तुमं आसण्णं विगअणं व सइ दुग्गज्झम् ।
विसएसु विलग्गन्ता तूरन्ता वि णलहन्ति डोलन्तमणा ॥
अहिपतिनगेन्द्र त्वामासन्नमपि गगनमिव सदा दुर्ग्राह्यम् ।
विषयेषु विलगन्तस्त्वरमाणा अपि न लभन्ते डोलायमानमनसः ॥

भत्ता तावअसेवारसभरिआ सअलरक्खणोमुअ रुइणा ।
करणाइं धरान्ति चिरं काङ्खिअमोक्खा वि अचुअ तुए ठविआ ॥
भक्तांस्तावकसेवारसभरितासकलरक्षणोत्सुकरुच्या ।
करणानि धरान्ति चिरं काङ्क्षितमोक्षा अप्यच्यत त्वया स्थापिताः ॥

ठिरगुणगिरिजणिएहिं सन्तारेसि णअसच्च णिअभत्तेहिम् ।
जम्मपरिवाडिजलहिं जङ्गमठिरसेउदंसणिज्जेहि जणे ॥
स्थिरगुणगिरिजनितैः सन्तारयसि नतसत्य निजभक्तैः ।
जन्मपरिपाटिजलधिं जङ्गमस्थिरसेतुदर्शनीयै र्जनान् ॥ ६२

पसमिअ भवन्तरभआ पत्तम्पत्तं हिअन्ति परिपेच्छन्ता ।
भावेन्तितुज्झभत्ता प्रिआइहिं व णअसचं पच्छिमदिअहम् ॥
प्रशमितभवान्तरभयाः प्राप्तंप्राप्तं हितमिति परिपश्यन्तः ।
भावयन्तितव भक्ताः प्रियातिथिमिव नतसत्य पश्चिमदिवसम् ॥ ६३
पअडतिमिरम्मि भुवणे पत्तपडिट्ठविअपरमणाणपईवा ।
णिज्जन्ति अच्चुअतुएणिअं पअं लइसयंपह कअकज्जा ॥
प्रकटतिमिरंभुवने प्रात्रप्रतिष्ठापित परमज्ञानप्रदीपाः ।
नीयन्तेऽच्युतत्वया निजम्पदं सदास्वयंप्रभंकृतकार्याः ॥ ६४
दिढतिव्वभत्तिणअणा परिपेच्छन्ता अहिन्दउरणाह तुमम् ।
पत्तातुहसाइज्जं पङ्क्तिंपूरेन्ति पण्णइन्दमुहाणम् ॥
दृढतीव्रभक्तिनयनाः परिपश्यन्तोऽहीन्द्रपुरनाथत्वाम् ।
प्राप्तास्तवसायुज्यं पङ्क्तिंपूरयन्ति पन्नगेन्द्रमुखानाम् ॥ ६५
सण्णअमुलहं अच्चुअ समाहिसोवाणमविळम्बविमुहिआ ।
सरणं गन्तूणतुमं मुत्तामुउउन्दखत्तबन्धुप्पमुहा ॥
सन्नतसुलभमंच्युत समाधिसोपान क्रमाविलम्बविमुखिताः ।
शरणङ्गत्वा त्वां मुक्ता मुचुकुन्दक्षत्रबन्धुप्रमुखाः ॥ ६६
देवाण पमुसमाणो जन्तूगन्तूण देवणाहतुहपअम् ।
तेहिच्चिअसव्वेहिं संसरमाणेहि होइ सइदिण्णबली ॥
देवानां पशुसमानो जन्तुर्गत्वा देवनाथ तवपदम् ।
तैरेवं सर्वैस्संसरमाणैर्भवतिसदादत्तबलिः ॥
मोहन्धारमहण्णव मुच्छिअमाआमहारआणिपच्चूहो ।
अच्चुअतुज्झ कडक्खोविमुत्तिपत्थाणपुढमपरिअरबन्धो ॥
मोहान्धकारमहार्णव मूर्छितमायामहारजनीप्रत्यूषः ।
अच्युततवकटाक्षो विमुक्तिप्रस्थान प्रथमपरिकरबन्धः ॥ ६८
मोक्खसुहरुक्खमूलं मोहजराउर महारसाअणपवरम् ।
सअलकुसलेक्कखेत्तं किङ्करसच्च तुहकित्तणं आमिअणिहम् ॥

मोक्षसुखवृक्षमूलं मोहजरातुरमहारसायनप्रवरम् ।
सकलकुशलैकक्षेत्रं किङ्करसत्य तव कीर्तनममृतनिभम् ॥ ६९

णत्थि अहिक्कमणासो विच्छेअंमि वि ण पच्चवाअपसङ्गो ।
सप्पा वि तुह सपज्जा अच्चुअ रक्खइ महत्तराउ भआओ ॥
नास्त्यभिक्रमनाशः विच्छेदेऽपि न प्रत्यवायप्रसङ्गः ।
स्वल्पाऽपि तव सपर्याऽच्युत रक्षति महत्तराद्भयात् ॥ ७०

अपसाए अपसण्णा तुज्झ पसाअंमि दाससच्च पसण्णा ।
आरज्झा हान्ति परं किं तेहि पसङ्गलंभिअपहावेहिम् ॥
अप्रसादेऽप्रसन्नास्तव प्रसादे दाससत्य प्रसन्नाः ।
आराध्या भवन्ति परं किं तैः प्रसङ्गलम्भितप्रभावैः ॥ ७१

इअरतिअसा पसण्णा किङ्करसच्च मह किण्णु काहिन्तिहिअम् ।
णीहारघणसएहिं णहु पूरिज्जइ कहं वि चाअअतह्ला ॥
इतरत्रिदशाः प्रसन्नाः किङ्करसत्य मम किंनु करिष्यन्ति हितम् ।
नीहारघनशतैर्नखलु पूर्यते कथमपि चातकतृष्णा ॥ ७२

अणुगअसुहमिअतह्ला अच्चुअ वीसमइ तुज्झ मामअतह्ला ।
पवहेसु पारिसराए आसिअपवहन्तघणकिवासरिआए ॥
अनुगतसुखमृगतृष्णाऽच्युत विश्राम्यति तव मामकतृष्णा ।
प्रवाहेषु प्रसृतायाः आश्रितप्रवहद्घनकृपासरितः ॥ ७३

विअलसअलङ्गविसमे धम्मे णअसच्च धअणिहे धारन्तो ।
कान्तारपन्थओ विअ खलन्तचलणोम्हि काअरविसीरन्तो ॥
विकलकलाङ्गविषमान् धर्मान् नतसत्य ध्वजनिभान् धारयन् ।
कान्तारपान्थक इव स्खलच्चरणोऽस्मि कातरविशीर्यमाणः ॥ ७४

ठिरधम्मवम्मछइअं अधम्मपवणाण अग्गमकन्धपवट्टम् ।
अघडन्तविपडिसारं अच्चुअ मं हससि णूण लच्छिसमक्खम् ॥
स्थिरधर्मवर्मस्थगितमधर्मप्रवणानामग्रस्कन्धप्रवृत्तम् ।
अघटमानविप्रतीसारं अच्युत मां हससि लक्ष्मीसमक्षम् ॥ ७५

तरिउं अच्चुअ दुरिअं इमम्मि देहम्मि एक्कदिअह विकअम् ।
कालो अलं ण सअलो कलुणाए तुज्झ पुण्णपत्तम्मिइमो ॥
तरितुमच्युत दुरितमस्मिन् देहे एकदिवसेऽपि कृतम् ।
कालो अलं न सकलः करुणायास्तव पूर्णपात्रे भवामः ॥ ७६

अच्चुअ तुज्झ गुणाणं मह दोषाणं वि णत्थि कुत वि गणणा ।
तहविजओफुडमाणं अहिअं लीणा ण होइ णहु दोब्बल्लम् ॥
अच्युत तव गुणानां मम दोषाणामपि नास्ति कुत्रापि गणना ।
तथाऽपि जयः प्रथमानामधिकं लीनानां भवति न खलु दौर्बल्यम् ॥

रत्तिं दिअहं अच्चुअ तुडिअपडन्ताइ आउदुमखण्डाइम् ।
दट्ठूण वि दरिअमणं बालं एह्णिं वि भरसु मं अपमत्तो ॥
रात्रिंदिवसमच्युत त्रुटितपटायमानान्यायुर्द्रुमखण्डानि ।
दृष्ट्वाऽपि दृप्तमनसं बालमिदानीमपि भरस्व मामप्रमत्तः ॥ ७८

णीसाससङ्कणिज्जे देहे पडलन्तसलिलबिन्दुसारिच्छे ।
जाणसि णअसच्च तुमं जरन्तकरणेवि दीहजोव्वणतह्णम् ।
निश्वासशङ्कनीये देहे पटलान्तसलिलबिन्दुसदृक्षे ।
जानासि नतसत्य वं जरत्करणेऽपि दीर्घयौवनतृष्णाम् ॥ ७९

अमुणिअआणिअकाअव्वं तिलग्गतुलङ्क मुणिएसु मंवि पडिऊलगइम् ।
इअणिअसहावविलिअं हाउं दासाणसच्च णहु तुह जुत्तम् ॥
अज्ञातनिजकर्तव्यं तिलाग्रयदृच्छया ज्ञातेषु मामपि प्रतिकूलगतिम् ।
इति निजस्वभावव्रीळितं हातुं दासानां सत्य नं खलु तव युक्तम् ॥

कोऽहं किं करणिज्जं परिहराणिज्जं वि किन्ति जाणासि सव्वम् ।
तीअसि तं हिअं मह तिअसेसर कुणमु णिअहिअअणिक्खित्तम् ॥
कोऽहं किं करणीयं परिहरणीयमपि किमिति जानासि सर्वम् ।
शक्नोषि च यद्धितं मम त्रिदशेश्वर कुरुष्व निजहृदयनिक्षिप्तम् ॥ ८१

एह्णिं उवरिं वि इमो गुणगाहओ दारुपुत्त व्व परवसो ।
तस्स वि मह तिअसेसरतीसु वि करणेसु होसु सुहसङ्कप्पो ॥

इदानीमुपर्यप्ययं गुणगृहीतो दारुपुत्रक इव परवशः ।
तस्यापि मम त्रिदशेश्वर त्रिष्वपि करणेषु भव तुल्यसङ्कल्पः ॥　　८२

णिअकम्मणिअहजुअलं अच्चुअ काऊण महपिआपिअवग्गे ।
काहे घोरकळेवरकाराघरकुहरणिग्गअं काहिसि मम् ॥
निजकर्म निगळयुगळ मच्युत कृत्वा ममप्रियाप्रियवर्गे ।
कदाघोरकळेवर कारागृहकुहरनिर्गतं करिष्यसि माम् ॥　　८३

हद्द तुमंमि कइआ वीसमिअं ब्रह्मधमणिमग्गणिहिन्तम् ।
दिणअरदिण्णग्गअरं अच्चुअ देच्छिहिसि दइअसिहं वि अमम् ॥
हार्दे त्वयि कदा विश्रान्तं ब्रह्मधमनिमार्ग गमिष्यन्तम् ।
दिनकरदत्ताग्रकर मच्युत द्रक्ष्यसि दयितसिंहामिवमाम् ॥　　८४

काहे अमाणवन्ता अग्गिमुहा अइवाहिआ तुहपुरिसा ।
अइलं घेहिन्ति ममं अच्चुअ तमगहणतिउणमरुकन्तारम् ॥
कदाऽमानवान्त अग्निमुखा आतिवाहिका स्तवपुरुषाः ।
अतिलङ्घयिष्यन्तिमामच्युत तमोगहनत्रिगुणमरुकान्तारम् ॥　　८५

लङ्घिअविरआसरिअं लंभिअसइसुद्धसत्तमयसोम्मतणुम् ।
कअबह्माळङ्कारं काहिसि णअसच्च किङ्करंकाहेमम् ॥
लङ्घितविरजासरितं लंभितसदाशुद्धसत्वमय सौम्यतनुम् ।
कृतब्रह्मालङ्कारं करिष्यसि नतसत्य किङ्करं कदा माम् ॥　　८६

संसारसाअराओ उक्खित्तं तिअसणाह फुरिआलोअम् ।
काहेकाहिसि हियए कोत्थुहमणिदप्पणं व लच्छिपुलइअम् ॥
संसारसागरादुत्क्षिप्तं त्रिदशनाथ स्फुरितालोकम् ।
कदा करिष्यसि हृदये कौस्तुभमणिदर्पणमिव लक्ष्मीपुलकितम् ॥　　८७

काहे तुहपअपउमे होहिमि णअसच्च केलिकन्तातिहुवण ।
मअणारिउमउडमण्डण सुरसरिआ सोत्तसूइअमहुप्पवहे ॥
कदा तवपादपद्मे भविष्यामि नतसत्य केलिक्रान्त त्रिभुवने ।
मदनरिपुमकुटमण्डन सुरसरित्स्रोतस्सूचित मधुप्रवाहे ॥　　८८

उवणिसआसिरकुसुमं उत्तंसेऊण तुह पअम्बुअ जुअलम् ।
दइओ होहिमि कइआ दासो दासाण सच्च सूरिसरिच्छो ॥
उपनिषच्छिरःकुसुम मुत्तंसयित्वा तव पदाम्बुजयुगलम् ।
दयितो भविष्यामि कदा दासो दासानां सत्य सूरिसदृक्षः ॥ ८९
अउणोणिउत्तिजोग्गं ओआरविहार सहअरत्तणधणिअम् ।
अप्पसम भोअमेत्तं अणुहोहिसि देवणाह काहे णु ममम्
अपुनर्निवृत्तियोग्य मवतारविहार सहचरत्व धन्यम ।
आत्मसमभोगमात्र मनुभावयिष्यसि देवनाथ कदा नुमाम् ॥ ९०
इअ फुडमणोरहं मं एआरिसवअणमेत्तसारं वसअम् ।
कुणसु णिअगुणगणेहिं सच्चं दासाण सच्च सइ सच्छन्दो ॥
इति स्फुटमनोरथं मामेतादृशवचनमात्रसारं वशगम् ।
कुरुष्व निजगुणगणैस्सत्यं दासानां सत्य सदा स्वच्छन्दः ॥ ९१
बालपवओव्व तरलो मारुइजाइत्तिसाअरं तरिउमणो ।
पत्तेमि तुमं अच्चुअ कङ्खिअपअपउम खमसु मह कावेअम् ॥
बालप्लवग इव तरलो मारुतिजातिरिति सागरं तर्तुमनाः ।
प्रार्थयामि त्वा मच्युत कांक्षितपदपद्म क्षमस्व मम कापेयम् ॥ ९२
अच्चुअ विसअक्कन्तं भवण्णवावत्त भमिणिबुड्डिज्जन्तम् ।
जणणीथणन्धअंविअ मं उद्धरिऊण सेवसु सअं पच्छम् ॥
अच्युतविषयाक्रान्तं भवार्णवावर्तभ्रमि निमज्जन्तम् ।
जननीस्तनन्धयमिव मामुद्धृत्यसेवस्व स्वयंपथ्यम् ॥ ९३
कम्ममअघम्मतविअं सुहामिअतह्णाहि काहिवियतह्णाअम् ।
कारेसु णिव्वुअं मं करआसिसि रेहि अच्चुअकडक्खेहिम् ॥
कर्ममयघर्मतप्तं सुखमृगतृष्णाभिः काभिरप्यतृष्णाकम् ।
कारयस्व निर्वृतं मां करकाशिशिरै रच्युत कटाक्षैः ॥ ९४
तुह चिन्तणविसुहाणं दिट्ठिविसाणं वदंसणाउ मु एन्तो ।
अमिअमुहाणं विअ मं अच्चुअभत्ताण णेसुणअणासारम् ॥

तव चिन्तनविमुखानां दृष्टिविषाणामिव दर्शनान्मोचयन् ।
अमृतमुखानामिवमा मच्युत भक्तानां नयस्व नयनासारम् ॥　　९५

विसमिलिअमहुणिहेसुअ तणपडिमेसुअ पडिग्गहेसु पलुठिअम् ।
अमिअणिहिम्मिव अच्चुअ ठावेसुतुमम्मि णिम्ममंमम हिअअम् ॥
विषमिलितमधुनिभेषुच्च तृणप्रतिमेषुच्च प्रतिग्रहेषु प्रलुठितम् ।
अमृतनिधाविवाच्युत स्थापय त्वयि निर्ममं ममहृदयम् ॥　　९६

णिच्चं इमम्मिकिवणे णिक्खिवसु णमन्तसच्च णिहिसारिच्छे ।
पवहन्तणहपहाझर पसमिअ पणमन्तसञ्ज रेतुहचलणे ॥
नित्यमस्मिन् कृपणेनिक्षिप नमत्सत्य निधिसदृक्षौ ।
प्रवहन्नखप्रभाझरप्रशमित प्रणमत्संज्वरौ तव चरणौ ॥　　९७

सरणागओं त्तिजाणिए जणवाए वि जइ अच्चुअ ण रक्खसिमम् ।
होजखु साअरघोसो साअरपुलिनम्मि तारिसं तुहवअणम् ॥
शरणागत इति जनिते जनवादेऽपि यद्यच्युत नरक्षसिमाम् ।
भवेत्खलु सागरघोष स्सागरपुलिने तादृशं तव वचनम् ॥　　९८

णिक्खित्तोम्हि अअगई णिपुणेहि तुमम्मि णाहकारुणि एहिम् ।
तेतुह दट्ठूण पिए भरिअं णअसच्च भरसु अप्पाणभरम् ॥
निक्षिप्तोऽस्मि चागति निपुणैस्त्वयि कारुणिकैः ।
तांस्तव दृष्ट्वाप्रिया न्निभृतं नतसत्यभर स्वात्मभरम् ॥　　९९

णअसच्च पक्कणाणिअगलिअचिलाअममाणिअकुमारं व णिवो ।
होजन्तजोव्वणवहुं वरोव्व मं लहसु मन्तिअणविण्णविअम् ॥
नतसत्य पक्कणानीतगलितकिरातभ्रमनिजकुमारमिव नृपः ।
भविष्यद्यौवनवधूं वरइव मां लभस्व मन्त्रिजनविज्ञापितम ॥　　१००

इअ कइतक्कि अकेसरि वेअंन्ताअरिअवेङ्कडेसविरइअम् ।
सुहअं अच्चुअ सअअं साहिअअहिअएसु सोहउ समग्गगुणम् ॥
इति कवितार्किक केसरि वेदान्ताचार्य वेङ्कटेश विरचितम् ।
सुभगमच्युतशतकं सहृदयहृदयेषु शोभतां समग्रगुणम् ॥　　१०१

सिरिकइतक्किअसिहं कल्लाणाणं गुणाण सअलाण णिहिम् ।
सिरिमणवेङ्कटणाहं वेअन्ताअरिअवरिअमणिसं णविमो ॥
श्रीकवितार्किकसिंहं कल्याणानां गुणानां सकलानां निधिम् ।
श्रीमद्वेङ्कटनाथं वेदान्ताचार्यमनिशं नमामः ॥ १०२

श्रीकवितार्किकसिंहस्य......कृतिषु

अच्युतशतकं संपूर्णम् ॥

कवितार्किकसिंहाय—वेदान्त गुरवे नमः ॥

श्रीमन्निगमान्त महा देशिक विरचिता

## देवनायक पञ्चाशत् ।

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

प्रणत सुर किरीट प्रान्त मन्दारमाला विगलित मकरन्द स्निग्धपादारविन्दः ।
पशुपतिविधिपूज्यः पद्मपत्रायताक्षः फणिपतिपुरनाथः पातुमां देवनाथः ॥ १
देवाधिनाथ कमला प्रतनेश पूर्वां दीतान्तरां वकुलभूषण नाथ मुख्यैः ।
रामानुजप्रभृतिभिः परिभूषिताग्रं गोप्त्रींजगन्ति गुरुपङ्क्ति महं प्रपद्ये ॥ २
दिव्ये दयाजलनिधौ दिविषन्नियन्तु स्तीर्थं प्रदर्शितवत स्त्रिजगन्निषेव्यम् ।
प्राचः कवीन्निगमसम्मित सूक्तीन् प्राचेतसप्रभृतिका न्प्रणमाम्यभीक्ष्णम् ॥ ३
मातस्त्व मम्बुरुहवासिनि किंञ्चिदेतत् विज्ञाप्यते मयिकुरुष्व तथा प्रसादम्
आकर्णयिष्यति यथा विबुधेश्वर स्ते प्रेयानसौ पृथुकजल्पितवन्मदुक्तिम् ॥ ४
निर्विश्यमान विभवं निगमोत्तमाङ्गैः स्तोतुं क्षमं ममच देवपते भवन्तम् ।
गावः पिबन्तु गणशः कलशाम्बुराशिं किंतेन तर्णकगणा श्चिर मादधानाः ॥
अज्ञातसीमक मनन्त गरुत्मदाद्यैः तं त्वां समाधिनियतैरपि सामिदृष्टम् ।
तुष्टूषतो मम मनोरथसिद्धिदायी दानेषु सत्यइति धारय नामधेयम् ॥ ६

विश्राणयन्ममविशेषविदा मनीषा मन्तर्वर्तीगिर महीन्द्रपुराधिराज ।
स्तव्य स्तवप्रिय इतीव तपोधनोक्त स्तोतीति च त्वदभिधान मवन्ध्ययस्त्वम् ॥ ७
संरक्षणीय ममराधिपते त्वयैव दूरं प्रयात मपि दुस्त्यजगाढबन्धम् ।
आकृष्टवानसि भवाननुकम्पमान स्सूत्रानुबद्ध शकुनिक्रमत स्स्वयं माम् ॥ ८
व्यामोहिता विविधभोग मरीचिकाभि र्विश्रान्ति मद्यलभते विभुधैकनाथ ।
गम्भीरपूर्णमधुरं ममधी र्भवन्तं ग्रीष्मेतटाक मिव शीत मनुप्रविष्टा ॥ ९
दिव्येपदे जलनिधौ निगमोत्तमाङ्गे स्वान्तेसतां सवितृमण्डलमध्यभागे ।
ब्रह्माचलेच्च बहुमानपदे मुनीनां व्यक्तिं तव त्रिदशनाथ वदन्ति नित्याम् ॥
तीर्थैर्वृतं वृजिनदुर्गतिनाशनार्हैं श्शेष क्षमा विहगराज विरिञ्च जुष्टैः ।
नाथत्वया नतजनस्य भवौषधेन प्रख्यात मौषधगिरिं प्रणमन्ति देवाः ॥ ११
स्वाधीनविश्वविभवं भगवन् विशेषात् त्वां देवनायक मुशन्ति परावरज्ञाः ।
प्रायःप्रदर्शयितु मेतदिति प्रतीमः त्वद्भक्तिभूषित धिया मिह देवभावम् ॥ १२
तत्वानि यानि चिदचित्प्रविभागवन्ति त्रय्यन्तवृद्धगणितानि सितासितानि ।
दीव्यन्ति तान्यहिपुरन्दरधाम नाथ दिव्यास्त्रभूषणतया तवविग्रहेऽस्मिन् ॥
भूषायुधै रधिगतं निजकान्ति हेतो र्भुक्तं प्रियाभि रनिमेषविलोचनाभिः ।
प्रत्यङ्गपूर्ण सुषुमा सुभगं वपुस्ते दृष्ट्वा दृशौ विबुधनाथ नतृप्यतोमे ॥ १४
वेदेषु निर्जरपते निखिलेष्वधीतं व्यासादिभि र्बहुमतं तवसूक्त मग्र्यम् ।
अङ्गान्यमूनि भवतः सुभगान्यधीते विश्वं विभो जनिनवन्ति विरिञ्चपूर्वम् ॥
देवेश्वरत्व मिह दर्शयितुं क्षमस्ते नाथत्वयापि शिरसा विधृतःकिरीटः ।
एकीकृत द्युमणिबिम्बसहस्रतुल्यो निर्मूलयन्मनसिमे निबिडं तमिस्रम् ॥ १६
मुग्धस्मितामृत शुभेन मुखेन्दुना ते सङ्गम्य संसरणसंज्वर शान्तये नः ।
सम्पद्यते विबुधनाथ समाधियोग्या शर्वर्यसौ चटुल कुन्तल कान्तिरूपा ॥
बिम्बाधरं विकचपङ्कज लोचनं ते लम्बालकं ललितकुण्डल दर्शनीयम् ।
कान्तंमुखं कनककेतक कर्णपूरं स्वान्तं विभूषयति देवपते मदीयम् ॥ १८
लब्धातिथौ क्वचिदियं रजनीकरेण लक्ष्मीः स्थिरा सुरपते भवतो ललाटे ।
यत्स्वेदबिन्दुकणिकोद्गत बुद्बुदान्तस्त्र्यक्षः पुरा सपुरुषोऽजनिशूलपाणिः ॥

लावण्यवर्षिणि ललाटतटे घनाभे विभ्रत्तटिद्गुणविशेष मिवोर्ध्वपुण्ड्रम् ।
विश्वस्य निर्जरपते तमसावृतस्य मन्ये विभावयसि माङ्गळिकं प्रदीपम् ॥ २०
आहुः श्रुतिं विबुधनायक तावकीना माशागण प्रसवहेतु मधीतवेदाः ।
आकर्णिते तदिय मार्तरवे प्रजाना माशाःप्रसाधयितु मादिशति स्वयंत्वाम् ॥ २१
कन्दर्पलांछनतनुस्त्रिदशैकनाथ कान्तिप्रवाहरुचिरे तव कर्णपाशे ।
पुष्यत्यसौ प्रतिमुखस्थिति दर्शनीया भूषामयी मकरिका विविधा न्विहारान् ॥
नेतुं सरोजवसति र्निजमाधिराज्यं निंत्यं निशामयति देवपते भ्रुवौते ।
एवंनचेदखिलजन्तु विमोहनार्हा किं मातृका भवति कामशरासनस्य ॥ २३
आलक्ष्य सत्व मतिवेलदयोत्तरङ्ग मभ्यर्थिना मभिमत प्रतिपादनार्हम् ।
स्निग्धायतं प्रथिमशालि सुपर्वनाथ दुग्धाम्बुधेरनुकरोति विलोचनं ते ॥ २४
विश्वाभिरक्षण विहार कृतक्षणै स्ते वैमानिकाधिप विडंबितमुग्धपद्मैः ।
आमोदवाहिभि रनामय वाक्यगर्भै रार्द्रीभवा म्यमृतवर्षनिभै रपाङ्गैः ॥ २५
नित्योदितै र्निगमनिश्वसितै स्तवैषा नासा नभश्चरपते नयनाब्धि सेतुः ।
आम्रेडित प्रियतमा मुखपद्मगन्धै राश्वासिनी भवति संप्रति मुह्यतोमे ॥ २६
आरण्यपल्लवित यौवनपारिजात माभीरयोषि दनुभूत ममर्त्य नाथ ।
वंशेन शङ्खपतिनाच निषेवितं ते बिम्बाधरं स्पृशति रागवती मतिर्मे ॥ २७
पद्मालयावलयदत्त सुजातरेखे त्वत्कान्ति मेचकित शङ्खनिभे मतिर्मे ।
विस्मेरभावरुचिरा वनमालिकेव कण्ठे गुणीभवति देवपते त्वदीये ॥ २८
आजानुलम्बिभि रलंकृत हेतिजालैः ज्याघातराजिरुचिरै र्जितपारिजातैः ।
चिह्नाङ्कदे स्त्रिदशपुङ्गव जातसंगा त्वद्बाहुभि र्मम दृढं परिरभ्यते धीः ॥ २९
नीलाचलोदित निशाकरभास्कराभे शांताहिते सुरपते तव शङ्खचक्रे ।
पाणेरमुष्य भजता मभयप्रदस्य प्रत्यायनं जगति भावयत स्स्वभूम्ना ॥ ३०
अक्षोभणीय करुणांबुधिविद्रुमाभं भक्तानुरञ्जन ममर्त्यपते त्वदीयम् ।
नित्यापराधचकिते हृदये मदीये दत्ताभयं स्फुरति दक्षिण पाणिपद्मम् ॥ ३१
दुर्दान्तदैत्यविशिखक्षत पत्रभङ्गं वीरस्यते विबुधनायक बाहुपद्मम् ।
श्रीवत्स कौस्तुभ रमा वनमालिकाङ्कं चिन्ताऽनुभूय लभते चरितार्थतां नः ॥

वर्णक्रमेण विबुधेश विचित्रिताङ्गी स्मेरप्रसूनसुभगा वनमालिकेयम् ।
हृद्या सुगन्धि रजहत्कमलामणीन्द्रा नित्या तव स्फुरति मूर्तिरिव द्वितीया ॥
आर्द्रं तमोमथन माश्रित तारकन्ते शुद्धं मनः सुमनसाममृतंदुहानम् ।
तत्तादृशं विबुधनाथ समृद्धकामं सर्गेष्विदं भवति चन्द्रमसां प्रसूतिः ॥ ३४
विश्व निगीर्य विबुधेश्वर जातकार्श्यं मध्यं वलित्रयविभाव्यजगद्विभागम् ।
आमोदि नाभिनलिनस्थ विरिञ्चभृङ्गं आकल्पयन्युदरबन्ध इवाशयो मे ॥ ३५
नाकौकसां प्रथमता मधिकुर्वते ते नाभीसरोजरजसां परिणामभेदाः ।
आराधयन्ति रिहतै र्भवतस्समीची वीरोचिता विबुधनायक इत्यभिख्या ॥ ३६
पीताम्बरेण परिवारवती सुजात माल्ये निवेशयति देवपते दृशौमे ।
विन्यस्तसव्यकरसङ्ग मजायमान रोमाञ्चरम्य किरणा रशना त्वदीया ॥ ३७
स्त्रीरत्न कारण मुपात्ततृतीयवर्णं दैत्येन्द्रवीरशयनं दयितोपधानम् ।
देवेश यौवनगजेन्द्रकराभिराममूरीकरोतु भवदूरुयुगं मनो मे ॥ ३८
लावण्यपूर ललितोर्ध्वपरिभ्रमाभं लक्ष्मीविहार मणिदर्पण लब्धसख्यम् ।
गोपाङ्गणेषु कृत चंक्रमणं तवैतज्जानुद्वयं सुरपते नजहाति चित्तम् ॥ ३९
दौत्ये दुकूलहरणे व्रजसुन्दरीणां दैत्यानुधावनविधावपि लब्धसाह्यम् ।
कन्दर्पकाहळ निषङ्गकलाचिकाभं जङ्घायुगं जयति देवपते त्वदीयम् ॥ ४०
पाषाणनिर्मित तपोधनधर्मदारं भस्मन्युपाहित नरेन्द्रकुमारभावम् ।
संवाहितं त्रिदशनाथ रमामहीभ्यां सामान्यदैवतमुशंति पदंत्वदीयम् ॥ ४१
आवर्जिताभि रनुषज्य निजांशुजालै र्देवेश दिव्यपदपद्मदलायिताभिः ।
अन्याभिलाषपरिलोल मिदंमदीय मङ्गीकृतं हृदय मङ्गुलिभिः स्वयं ते ॥ ४२
पङ्क्त्यसौ मम निहान्ति महत्तरङ्गं गङ्गाधिकां विदधती गरुडस्रवन्तीम् ।
नाकौकसां मणिकिरीट गुणै रुपास्या नाथ त्वदीयपदयो र्नखरत्नपङ्क्तिः ॥ ४३
वज्रध्वजांकुश सुधाकलशातपत्र कल्पद्रुमांबुरुह तोरणशङ्खचक्रैः ।
मत्स्यादिभिश्च विबुधेश्वर मण्डितं ते मान्यं पदं भवतु मौळिविभूषणं नः ॥ ४४
चित्रं त्वदीय पदपद्मपरागयोगा द्योगं विनापि युगप द्विलयं प्रयान्ति ।
विश्वंचि निर्जरपते शिरसि प्रजानां वेधस्स्वहस्तलिखितानि दुरक्षराणि ॥ ४५

ये जन्मकोटिभि रुपार्जितशुद्धधर्मा स्तेषां भवच्चरणभक्ति रनन्य भोग्या ।
स्वजीवितैस्त्रिदशनायक दुर्लभैस्तै रात्मानमप्यकृपणः स्वय माप्नुवन्ति ॥
निष्किञ्चनत्वधनिना विबुधेन येन न्यस्तः स्वरक्षणभर स्तव पादपद्मे ।
नानाविध प्रथितयोगविशेष धन्याः नार्हन्ति तस्य शतकोटितमांशकक्ष्याम् ॥
आत्मापहाररसिकेन मयैव दत्त मन्यै रधार्य मधुना विबुधैकनाथ ।
स्वीकृत्य धारयितु मर्हसि मां स्वकीयं चोरोपनीत निजनूपुरवत्स्वपादे ॥
अज्ञानवारिधि मपाय धुरंधरमा माज्ञाविभञ्जन मकिंचन सार्वभौमम् ।
विन्द न्नभवा न्विबुधनाथ समस्तवेदी किं नामपात्र मपरं मनुते कृपायाः ॥४९
प्रह्लाद गोकुल गजेन्द्र परीक्षिदाद्या स्त्रातास्त्वया ननुविपत्तिषु तादृशीषु ।
सर्वन्तदेक मपरं ममरक्षणं ते संतोल्यतां त्रिदशनायक किं गरीयः ॥ ५०
वात्याशतै र्विषयरागतया विवृत्तै र्व्याघूर्णमानमनसं त्रिबुधाधिराज ।
नित्योपतप्त इति मां निजकर्मघर्मे निर्वेशयस्व पदपद्ममधुप्रवाहम् ॥ ५१

जय विबुधपतेत्वं दर्शिता भीष्टदानः
सह सरसिजवासा मेदिनीभ्यां वशाभ्याम् ।
नळवन मिव मृद्नन् पापराशिं नतानां
गरुड सरिदनूपे गन्धहस्तीव दीव्यन् ॥ ५२

निरवधिगुणजातं नित्यनिर्दोष माद्यं
नरक मथन दक्षं नाकिनामेकनाथम् ।
विनत विषय सत्यं वेङ्कटेशः कविस्त्वाम्
स्तुतिपद मधिगच्छन् शोभते सत्यवादी ॥ ५३

इति श्री कवितार्किक—कृतिषु
देवनायकपञ्चाशत् संपूर्णा ॥
कवितार्किक सिंहाय—वेदान्त गुरवे नमः ॥

—:* * *:—

## श्रीवरदराजपञ्चाशत्

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

द्विरदशिखरिसीम्ना सद्मवान् पद्मयोनेस्तुरगसवनवेद्यां श्यामलो हव्यवाहः ।
कलशजलधिकन्यावल्लरीकल्पशाखी कलयतु कुशलं नः कोऽपि कारुण्यराशिः ॥

यस्यानुभावमधिगन्तुमशक्नुवन्तः मुह्यन्त्यभङ्गुरधियो मुनिसार्वभौमाः ।
तस्यैव ते स्तुतिषु साहसमश्नुवानः क्षन्तव्य एष भवता करिशैलनाथ ॥ २

जानन्ननादिविहितानपराधवर्गान् स्वामिन् भयात्किमपि वक्तुमहं नशक्तः ।
अव्याजवत्सल तथाऽपि निरङ्कुशं मां वात्सल्यमेव भवतो मुखरीकरोति ॥ ३

किं व्याहरामि वरदस्तुतये कथं वा खद्योतवत् प्रलघुसंकुचितप्रकाशः ।
तन्मे समर्पय मतिं च सरस्वतीं च त्वामञ्जसा स्तुतिपदैर्यदहं धिनोमि ॥ ४

त्वच्छक्तिमात्रगणने किमिहास्ति शक्यं शक्येनवा तवकरीश किमस्ति साध्यम् ।
यद्यास्ति साधय मया तदपि त्वयावा किंवा भवेत् भवति किञ्चिदनीहमाने ॥

स्तोत्रं मया विरचितं त्वदधीनवाचा त्वत्प्रीतये वरद यत्तदिदं नचित्रम् ।
आवर्जयन्ति हृदयं खलु शिक्षकाणां मञ्जूनि पञ्जरशकुन्तविजल्पितानि ॥ ६

यं चक्षुषामविषयं हयमेधयज्वा द्राघीयसा सुचरितेन ददर्श वेधाः ।
तं त्वां करीश करुणापरिणामतस्ते भूतानि हन्त निखिलानि निशामयन्ति ॥

तत्तत्पदैरुपहितेऽपि तुरङ्गमेधे शक्रादयो वरद पूर्वमलब्धभागाः ।
अध्यक्षिते मखपतौ त्वयि चक्षुषैव हैरण्यगर्भहविषां रसमन्वभूवन् ॥ ८

सर्गस्थितिप्रळयविभ्रमनाटिकायां शैलूषवद्विविधवेषपरिग्रहं त्वाम् ।
संभावयन्ति हृदयेन करीश धन्याः संसारवारिनिधिसन्तरणैकपोतम् ॥ ९

प्रातीदयेषु वरद त्वदनुप्रवेशात् पद्मासनादिषु शिवादिषु कञ्चुकेषु ।
तन्मात्रदर्शनविलोभितशेमुषीकाः तादात्म्यमूढमतयो निपतन्त्यधीराः ॥ १०

मध्ये विरिञ्चिशिवयोर्विहितावतारः ख्यातोऽसि तत्समतया तदिदं न चित्रम् ।
मायावशेन मकरादिशरीरिणं त्वां तानेव पश्यति करीश यदेष लोकः ॥ ११

ब्रह्मेति शङ्कर इतीन्द्र इति स्वराडित्यात्मेति सर्वमिति सर्वचराचरात्मन् ।
हस्तीश सर्ववचसामवसानसीमां त्वां सर्वकारणमुशन्त्यनपायवाचः ॥ १२

आशाऽधिपेषु गिरिशेषु चतुर्मुखेष्वप्यव्याहता विधिनिषेधमयी तवाज्ञा ।
हस्तीश नित्यमनुपालनलङ्घनाभ्यां पुंसां शुभाशुभमयानि फलानि सूते ॥ १३
त्राताऽऽपदि स्थितिपदं भरणं प्ररोहश्छाया करीश सरसानि फलानिच त्वम् ।
शाखागतत्रिदशबृन्दशकुन्तकानां किं नाम नासि महतां निगमद्रुमाणाम् ॥
सामान्यबुद्धिजनकाश्च सदादिशब्दाः तत्वान्तरभ्रमकृतश्च शिवादिवाचः ।
नारायणे त्वयि करीश वहन्त्यनन्यमन्वर्थवृत्तिपरिकल्पितमैककण्ठ्यम् ॥ १५
सञ्चितयन्त्यखिलहेयविपक्षभूतं शान्तोदितं शमवता हृदयेन धन्याः ।
नित्यं परं वरद सर्वगतं सुसूक्ष्मं निष्पन्दनन्दथुमयं भवतस्स्वरूपम् ॥ १६
विश्वातिशायिसुखरूपयदात्मकस्त्वं व्यक्तिं करीश कथयन्ति तदात्मिकां ते ।
येनाधिरोहति मतिस्त्वदुपासकानां सा किं त्वमेव तव वेत्ति वितर्कडोळाम् ॥
मोहान्धकारविनिवर्तनजागरूके दोषा दिवाऽपि निरवग्रहमेधमाने ।
त्वत्तेजसि द्विरदशैलपते विमृष्टे श्लाघ्येत संतमसपर्व सहस्रभानोः ॥ १८
रूढस्य चिन्मयतया हृदये करीशस्तम्भानुकारिपरिणामविशेषभाजः ।
स्थानेषु जाग्रति चतुर्ष्वपि सत्ववन्तः शाखाविभागचतुरे तव चातुरात्म्ये ॥ १९
नागाचलेश निखिलोपनिषन्मनीषा मञ्जूषिकामरतकं परिचिन्वतां त्वाम् ।
तन्वी हृदि स्फुरति काऽपि शिखा मुनीनां सौदामिनीव निभृता नवमेघगर्भा ॥
औदन्वते महति सद्मनि भासमाने श्लाघ्ये च दिव्यसदने तमसः परस्मिन् ।
अन्तःकलेबरमिदं सुषिरं सुसूक्ष्मं जातं करीश कथमादरणास्पदं ते ॥ २१
बालाकृतेर्वटपलाशमितस्य यस्य ब्रह्माण्डमण्डलमभूदुदरैकदेशे ।
तस्यैव तद्वरद हन्त कथं प्रभूतं वाराहमास्थितवतो वपुरद्भुतं ते ॥ २२
भक्तस्य दानवशिशोः परिपालनाय भद्रां नृसिंहकुहनामधिजग्मुषस्ते ।
स्तंभैकवर्जमधुनाऽपि करीश नूनं त्रैलोक्यमेव निभृतं नरसिंहगर्भम् ॥ २३
क्रामन् जगत् कपटवामनतामुपेतः त्रेधा करीश स भवान् निदधे पदानि ।
अद्यापि जन्तव इमे विमलेन यस्य पादोदकेन विधृतेन शिवा भवन्ति ॥ २४
येनाचलप्रकृतिना रिपुसंक्षयार्थं वारांनिधिं वरद पूर्वमलङ्घयस्त्वम् ।
तं वीक्ष्य सेतुमधुनाऽपि शरीरवन्तः सर्वे षडूर्मिबहुलं जलधिं तरन्ति ॥ २५

इत्थं करीश दुरपह्नवदिव्यभव्यरूपान्वितस्य विबुधादिविभूतिसाम्यात् ।
केचिद्विचित्रचरितान्भवतोऽवतारान् सत्यान् दयापरवशस्य वदन्ति सन्तः २६
सौशील्यभावितधिया भवता कथंचित्संभावितानपि गुणान्वरद त्वदीयान् ।
प्रत्यक्षयन्त्यविकलं तव सन्निकृष्टाः पत्युस्त्विषामिव पयोदवृतान्मयूखान् ।। २७
नित्यं करीश तिमिराविलदृष्टयोऽपि सिद्धाञ्जनेन भवतैव विभूषिताक्षाः ।
पश्यन्त्युपर्युपरि संसरतामदृश्यं मायानिगूढनिरपायमहानिधिं त्वाम् ।। २८
सत्यस्त्यजन्ति वरद त्वयि बद्धभावाः पैतामहादिषु पदेष्वपि भावबन्धम् ।
कस्मै स्वदेत सुखसंतरणोत्सुकाय कारागृहे कनकशृङ्खलयाऽपि बन्धः ।। २९
हस्तीश दुःखविषदिग्धफलानुबन्धिन्याब्रह्मकीटमपराहतसंप्रयोगे ।
दुष्कर्मसञ्चयवशाद्दुरतिक्रमे नः प्रत्यस्त्रमञ्जलिरसौ तव निग्रहास्त्रे ।। ३०
त्वद्भक्तिपोतमवलंबितुमक्षमाणां पारं परं वरद गन्तुमनीश्वराणाम् ।
स्वैरं लिलङ्घयिषतां भववारिराशिं त्वामेव गन्तुमसि सेतुरभङ्गुरस्त्वम् ।। ३१
अश्रान्तसंसरणघर्मनिपीडितस्य भ्रान्तस्य मे विषयभोगमरीचिकासु ।
जीवातुरस्तु निरवग्रहमेधमानः देव त्वदीयकरुणामृतदृष्टिपातः ।। ३२
अन्तः प्रविश्य भगवन्नखिलस्य जन्तोरासेदुषस्तव करीश भृशं दवीयान् ।
सत्यं भवेयमधुनाऽपि स एव भूयः स्वाभाविकी यदि दया तव नान्तरायः ।।
अज्ञातनिर्गममनागमवेदिनं मा मन्धं न किञ्चिदवलम्बनमश्नुवानम् ।
एतावतीं गमयितुः पदवीं दयालोः शेषाध्वलेशनयने क इवातिभारः ।। ३४
भूयोऽपि हन्त वसतिर्यदि मे भवित्री याम्यासु दुर्विषहवृत्तिषु यातनासु ।
सम्यग्भविष्यति ततश्शरणागतानां संरक्षितेति बिरुदं वरद त्वदीयम् ।। ३५
पर्याकुलं महति दुःखपयोनिधौ मां पश्यन् करीश यदि जोषमवस्थितस्त्वम्
स्फारेक्षणेऽपि मिषति त्वयि निर्निमेषं पारेकरिष्यति दया तव दुर्निवारा ।। ३६
किंवा करीश कृपणे मयि रक्षणीये धर्मादिबाह्यसहकारिगवेषणेन ।
नन्वस्ति विश्वपरिपालनजागरूकः सङ्कल्प एव भवतो निपुणस्सहायः ।। ३७
निर्यन्त्रणं परिणमन्ति न यावदेते नीरन्ध्रदुष्कृतभवाः दुरितप्ररोहाः ।
तावन्नचेत् त्वमुपगच्छसि शार्ङ्गधन्वा शक्यं त्वयाऽपि नहि वारयितुं करीश ।।

यावन्नपश्यति निकाममर्पणो मां भ्रूभङ्गभीषणकरालमुखः कृतान्तः ।
तावत्पतंतु मयि ते भगवन् दयालो रुन्निद्रपद्मकलिकामधुराः कटाक्षाः ॥ ३९

स त्वं सएव रभसो भवदौपवाह्यः चक्रं तदेव शितधारमहं च पाल्यः ।
साधारणे त्वयि करीश समस्तजन्तोः मातङ्गमानुषभिदा न विशेषहेतुः ॥ ४०

निर्वापयिष्यति कदा करिशैलधामन् दुर्वारकर्मपरिपाकमहादवाग्निम् ।
प्राचेतदुःखमपि मे सुखयन्निव त्वत्पादारविन्दपरिचाररसप्रवाहः ॥ ४१

मुक्तस्स्वयं सुकृतदुष्कृतशृङ्खलाभ्यां अर्चिर्मुखैरधिकृतैरतिवाहितात्मा ।
स्वच्छन्दकिङ्करतया भवतः करीश स्वाभाविकं प्रतिलभेय महाधिकारम् ॥ ४२

त्वं चेत् प्रसीदसि तवास्मि समीपतश्चेत् त्वय्यस्ति भक्तिरनघा करिशैलनाथ
संसृज्यते यदि च दासजनस्त्वदीयः संसार एष भगवन्नपवर्ग एव ॥ ४३

आहूयमानमनपायविभूतिकामैः आलोकलुप्तजगदान्ध्यमनुस्मरेयम् ।
आलोहितांशुकमनाकुलहेतिजालं हैरण्यगर्भहयमेधहविर्भुजं त्वाम् ॥ ४४

भूयोभूयः पुलकनिचितैरङ्गकैरेधमानाः
स्थूलास्थूलान्नयनमुकुलैर्बिभ्रतो बाष्पबिन्दून् ।
धन्याः केचिद्वरद भवतस्संसदं भूषयन्तः
स्वान्तैरन्तर्विनयनिभृतैः स्वादयन्ते पदं ते ॥ ४५

वरद तव विलोकयन्ति धन्याः मरतकभूधरमातृकायमाणम् ।
व्यपगतपरिकर्मवारवाणं मृगमदपङ्कविशेषनीलमङ्गम् ॥ ४६

अनिभृतपरिरम्भैराहितामिन्दिरायाः
कनकवलयमुद्रां कण्ठभागे दधानः ।
फणिपतिशयनीयादुत्थितस्त्वं प्रभाते
वरद सततमन्तर्मानसं सन्निधेयाः ॥ ४७

तुरगविहगराजस्यन्दनान्दोलिकादि
ष्वधिकमधिकमन्यामात्मशोभां दधानम् ।
अनवधिकविभूतिं हस्तिशैलेश्वरं त्वां
अनुदिनमनिमेषैर्लोचनैर्निर्विशेयम् ॥ ४८

निरन्तरं निविंशत त्वदीय मस्पृष्टचिन्तापद माभिरूप्यम् ।
सत्यं शपे वारणशैलनाथ वैकुण्ठवासेऽपि न मेऽभिलाषः ॥ ४९

व्यालम्बाना तरुणतुलसीदामभि स्वामभिख्यां
मातङ्गाद्रौ मरतकरुचिं पुष्णती मानसं नः ।
भोगैश्वर्यप्रियसहचरैः काऽपि लक्ष्मीकटाक्षैः
भूयश्श्यामा भुवनजननी देवता सन्निधत्ताम् ॥ ५०

इति विहितमुदारं वेङ्कटेशेन भक्त्या श्रुतिसुभग मिदं य स्तोत्र मङ्गीकरोति ।
करिशिखरिविटङ्कस्थायिनः कल्पवृक्षात् भवति फलमशेषं तस्य हस्तापचेयम् ॥

इति श्रीवेदान्ताचार्यस्य कृतिषु

* वरदराजपञ्चाशत् संपूर्णा ॥ *

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

—:* * *:—

श्रीमन्निगमान्तमहादेशिक विरचितः

## दे ह ली श स्त वः.

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्ताम् सदा हृदि ॥

विक्रम्य येन विजितानि जगन्ति भूम्ना विश्वस्य यं परमकारण मामनंति ।
विश्राणयन् प्रणयिनां विविधान् पुमर्थान् गोप्ता स मे भवतु गोपपुराधिराजः ॥
देहल्यधीश्वर तवेहशमीश्वरस्य तुष्टूषतां दिशति गद्गदिकानुबन्धम् ।
वाचालयत्यथ च मां क्वचन क्षपायां क्षान्तेन दान्त कविमुख्य विमर्दितेन ॥ २
त्वच्चक्रवद्द्रुत मनेहसि घूर्णमाने निम्नोन्नतक्रमनिदर्शित नेमिवृत्ताः ।
आगत्य गोपनगरे कृपयोदितं त्वां स्वाराज्य मग्र्य मलभन्त सुरासुरेन्द्राः ॥
आकल्प पुष्प सुभगोन्नत बाहुशाखः पादे सदापरिचितेलिम सत्फलस्त्वम् ।
पिञ्जातटिस्पृशि मृकण्डुतपोवनेऽस्मिं श्छायानिलीनभुवनोऽसि तमालशाखी ॥

चक्रस्य दैत्य दनुजादिषु वामभावं शङ्खस्यसंश्रितजनेषुच दक्षिणत्वम् ।
व्यक्तं प्रदर्शयसि गोपपुराधिराज व्यत्यस्यमान मनयोः करसंप्रयोगात् ॥ ५
दीपेन केनचि दर्शितरुचा निशीथे स्नेहोपपन्नपरिशुद्धगुणार्पितेन ।
दह्यावकाशनिबिडं ददृशु र्भवन्तं स्वाध्याययोगकलनाशुचयः कवीन्द्राः ॥ ६
कासारपूर्व कविमुख्यविमर्दजन्मा पिन्नातटेक्षुसुभगोऽस्यरसो बहु स्ते ।
त्वत्पादपद्ममधुनि त्वदनन्यभोग्ये नूनं समाश्रयति नूतनशर्करात्वम् ॥ ७
वैरोचनेसदसि वामनभूमिकावान्विक्रान्त ताण्डवरसेन विजृम्भमाणः ।
चक्रे भवान् मकरकुण्डलकर्णपाशः श्यामैकमेघभरितामिव सप्तलोकीम् ॥ ८
चित्रं नत स्त्रिषु मितानि पदेषु यत्ते विश्वान्यमूनि भुवनानि विशङ्कटेषु ।
भक्तैस्सह क्वचिदसौ भुवनैकदेशे मातिस्म मूर्ति रमिता तदिहाद्भुतं नः ॥ ९
भक्तप्रिय त्वयि तथा परिवर्धमाने मुक्तावितानविततिः स्तव पूर्वमासीत् ।
हारावलिः पर मथोरशनाकलाप स्तारागण स्तदनु मौक्तिकनूपुर श्रीः ॥ १०
भिक्षोचितं प्रकटयन् प्रथमाश्रमस्त्वम् कृष्णाजिनं यवनिकां कृतवा न्प्रियायाः ।
व्यक्ताकृतेस्तव समीक्ष्य भुजान्तरे ताम् त्वामेव गोपनगरीश जनाविदु स्ते ११
सत्कुर्वतां तवपदं चतुराननत्वं पादोदकं च शिरसावहतां शिवत्वम् ।
एकत्रिविक्रमणकर्मणि ते द्वयं तत् देहल्यधीश युगपत्प्रथितं पृथिव्याम् ॥ १२
भक्तोपमर्दसह पाद सरोजतस्ते मन्दाकिनी विगलिता मकरन्दधारा ।
सद्भ्यस्त्रिवर्ग मपवर्गमपि क्षरन्ती पुण्याबभूव पुरशासन मौलिमाला ॥ १३
विक्रांतकेतुपटिका पदवाहिनी ते न्यञ्चन्त्युपैति नतजीवित शिशुमारम् ।
औत्तानपादि ममृतांशु मशीतभानुं हेमाचलं पशुपतिं हिमवन्तमुर्वीम् ॥ १४
वेधः कमण्डलुजलै र्विहितार्चनं ते पादांबुजं प्रतिदिनं प्रतिपद्यमाना ।
स्तोत्रप्रिय त्रिपथगादिसरिद्वराणां पिन्ना बभूव भुवने बहुमानपात्रम् ॥ १५
स्वच्छन्दकैतव समुन्नमिता दमुष्मा त्स्रोतस्त्रयं यदभव त्तव पादपद्मात् ।
वेताळभूतसरसा मपदिश्यवाचं प्रायेण तत्प्रसवभूमि मवापभूयः ॥ १६
क्रीडापरेण भवता विविधापराधानाराधकाननुपरोधमुदञ्चयिष्यन् ।
ताम्रेण पादनखरेण तदाऽण्डमध्ये घण्टापथ किमपि नूनमवर्तय स्त्वम् ॥ १७

कामावलेपिकरुणार्णवबिन्दुरेकः क्षिप्तस्त्वकेळितरसा तव देहळीश ।
त्वत्सन्ततेरुभयथा विततिं भजन्तः संसारदावदहनं शमयत्यशेषम् ॥ १८

नीडोदरान्निपतितस्य शुकार्भकस्य त्राणेन नाथ विहरन्निव सार्वभौमः ।
आदाय गोपनगराधिपते स्वयं मां क्रीडादयाव्यतिकरेण कृतार्थय स्त्वम् ॥ १९

लीलाशकुन्तमिव मां स्वपदोपलब्ध्यै स्वैरं क्षिपन् दुरितपञ्जरतो गुणस्थम् ।
तत्तादृशं कमपि गोपपुरीविहारिन् सन्तोषमुल्ललय सागरसम्भवायाः ॥ २०

वातूलकल्पवृजिनप्रभवैर्मदीयां वैयाकुलीं विषयसिन्धुतरङ्गभङ्गैः ।
दासोपमर्दसह दुर्निरसां त्वदन्यैः अन्वीक्ष्य गाढमनुकंपितुमर्हसि त्वम् ॥ २१

एनस्ततीमति सदा मयि जायमानां देहल्यधीश दृषदोऽपि विलापयन्तीम् ।
नाथे समग्रशकने त्वयि जागरूके किं ते सेहत करुणाऽकरुणामवस्थाम् ॥ २२

आत्मोन्नतिं परनिकर्षमपीह वांछन् निम्नेऽपि मोहजलधौ निपतामि भूयः ।
तन्मामुदञ्चय तवोन्नतपाददघ्न देहल्यधीश गुणितेन दयागुणेन ॥ २३

अक्षीणकल्मषरसोऽपि तवानृशंस्यात् लक्ष्मीसमक्षमपि विज्ञपयाम्यभीतः ।
भक्तोपमर्दरसिकः स्वयमल्पबुद्धेर्यन्मन्यसे मम हितं तदुपाददीथाः ॥ २४

मन्ये दयाद्रहृदयेन महाधनं मे व्यक्तं त्वयैव मनपाय मकिंचनत्वम् ।
येन स्तनंधय मिव स्वहितानभिज्ञं न्यासीकरोषि निजपादसरोरुहे माम् ॥ २५

दुर्वार तीव्रदुरित प्रतियावदकै रौदार्यवद्धि स्नघास्मित दर्शनीयैः ।
देहल्यधीश्वर दयाभरितै रपाङ्गै र्वाचं विनापि वदसीव मयि प्रसादम् २६

अयमनवमसूक्तै रादिभक्तैर्यथाव द्विशदितनिजतत्वो विश्व मव्या दभव्यात् ।
रथचरणानिरूढव्याञ्जितानां जनानां दुरितमथनलीलादोहळी देहळीशः ॥ २७

इयमवितथवर्णा वर्णनीयस्वभावा विदितनिगमसीम्ना वेङ्कटेशेन गीता ।
भवभुवि मरुतृष्णालोलपर्याकुलानां दिशतु फलमभीष्टं देहळीशस्तुतिर्नः ॥ २८

इति कवितार्किकसिंहस्य—श्रीमद्वेदान्ताचार्यस्य कृतिषु

—ः देहळीशस्तवः संपूर्णः ः—

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

## यथोक्तकारिस्तोत्रम् ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

एकं वेगवतीमध्ये हास्तिशैले च दृश्यते ।
उपायफलभावेन स्वयंव्यक्तं परं महः ॥ १

ईष्टे गमयितुं पार मेष सेतु रभङ्गुरः ।
यत्र सारस्वतं स्रोतो विश्राम्यति विशृङ्खलम् ॥ २

जयति जगदेकसेतु र्वेगवतीमध्यलक्षितो देवः ।
प्रशमयति यः प्रजानां प्रथिता स्संसारजलधिकल्लोलाः ॥ ३

विभातु मे चेतसि विष्णुसेतुः वेगापगावेगविघातहेतुः ।
अम्भोजयोनेर्यदुपज्ञमासी दभङ्गरक्षा हयमेधदीक्षा ॥ ४

चतुराननसप्ततन्तुगोप्ता समये तत्परिपान्थिनो निरुन्धन् ।
परिपुष्यति मङ्गलानि पुंसां भगवान्भक्तिमतां यथोक्तकारी ॥ ५

श्रीमान्पितामहवधूपरिचर्यमाणः शेते भुजङ्गशयने स महाभुजङ्गः ।
प्रत्यादिशन्ति भवसञ्चरणं प्रजानां भक्तानुगन्तुरिह तस्य गतागतानि ॥ ६

प्रशमितहयमेधव्यापदं पद्मयोनेः श्रितजनपरतन्त्रं शेषभोगे शयानम् ।
शरणमुपगतास्स्मः शान्तनिश्शेषदोषं शतमखमणिसेतुं शाश्वतं वेगवत्याः ॥ ७

शरणमुपगतानां सोयमादेशकारी शमयति परितापं संमुखं स्सर्वजन्तोः ।
शतगुणपरिणाम स्सन्निधौ यस्य नित्यं वरवितरण भूमा वारणाद्रीश्वरस्य ॥ ८

काञ्चीभाग्यं कमलनिलयाचेतसोऽभीष्टसिद्धिः
कल्याणानां निधि रविकलः कोऽपि कारुण्यराशिः ।
पुण्यानां नः परिणति रसौ भूषयन् भोगशय्याम्
वेगासेतु र्जयति विपुलो विश्व रक्षैक हेतुः ॥ ९

वेगासेतो रिदं स्तोत्रं वेङ्कटेशेन निर्मितम् ।
ये पठन्ति जना स्तेषां यथोक्तं कुरुते हरिः ॥ १०

इति कवितार्किकसिंहस्य कृतिषु यथोक्तकारिस्तोत्रं संपूर्णम् ॥

कवितार्किकसिंहाय—वेदान्त गुरवे नमः ॥

श्रीमन्निगमान्तमहादेशिकविरचिता

## गोपालविंशतिः ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

वन्दे बृन्दावनचरं वल्लवीजनवल्लभम् ।
जयन्तीसंभवं धाम वैजयन्तीविभूषणम् ॥ १

वाचं निजाङ्करसिकां प्रसमीक्षमाणः वक्त्रारविन्दविनिवेशितपाञ्चजन्यः ।
वर्णत्रिकोणरुचिरे वरपुण्डरीके बद्धासनो जयति वल्लवचक्रवर्ती ॥ २

आम्नायगन्धिरुचिरस्फुरिताधरोष्ठ मास्राविलेक्षण मनुक्षणमन्दहासम् ।
गोपालडिंभवपुषं कुहनाजनन्याः प्राणस्तनन्धयमवैमि परं पुमांसम् ॥ ३

आविर्भवत्वनिभृताभरणं पुरस्तात् आकुञ्चितैकचरणं निभृतान्यपादम् ।
दध्ना निमन्थमुखरेण निबद्धतालं नाथस्य नन्दभवने नवनीतनाट्यम् ॥ ४

हर्तुं कुम्भे विनिहितकरः स्वादु हैयङ्गवीनं
दृष्ट्वा दामग्रहणचटुलां मातरं जातरोषाम् ।
पायादीषत्प्रचलितपदो नापगच्छन्नतिष्ठन्
मिथ्यागोपस्सपदि नयने मीलयन्विश्वगोप्ता ॥ ५

व्रजयोषिदपाङ्गवेधनीयं मधुराभाग्यमनन्यभोग्यमीडे ।
वसुदेववधूस्तनन्धयं तत् किमपि ब्रह्म किशोरभावदृश्यम् ॥ ६

परिवर्तितकन्धरं भयेन स्मितफुल्लाधरपल्लवं स्मरामि ।
विटपित्वनिरासकं कयोश्चित् विपुलोलूखलकर्षकं कुमारम् ॥ ७

निकटेषु निशामयामि नित्यं निगमान्तैरधुनाऽपि मृग्यमाणम् ।
यमळार्जुनदृष्टबालकेळिं यमुनासाक्षिकयौवनं युवानम् ॥ ८

पदवीमदवीयसीं विमुक्तेः अटवीसंपदमम्बुवाहयन्तीम् ।
अरुणाधरसाभिलाषवंशां करुणां कारणमानुषीं भजामि ॥ ९

अनिमेषनिषेवणीयमक्ष्णो रजहद्यौवनमाविरस्तु चित्ते ।
कलहायितकुन्तलं कलापैः करुणोन्मादकविभ्रमं महो मे ॥ १०

अनुयायिमनोज्ञवंशनालैः अवतु स्पर्शितवल्लवीविमोहैः ।
अनघस्मितशीतलैरसौ मामनुकम्पासरिदंबुजैरपाङ्गैः ॥ ११

अधराहितचारुवंशनालाः मकुटालंबिमयूरपिञ्छमालाः ।
हरिनीलशिलाविभङ्गनीलाः प्रतिभास्सन्तु ममान्तिमप्रयाणे ॥ १२

अखिलानवलोकयामि कालान् महिलाधीनभुजान्तरस्य यूनः ।
अभिलाषपदं व्रजाङ्गनानामभिलापक्रमदूरमाभिरूप्यम् ॥ १३

हृदि मुग्धशिखण्डमण्डनो लिखितः केन ममैष शिल्पिना ।
मदनातुरवल्लवाङ्गना वदनाम्भोजदिवाकरो युवा ॥ १४

महसे महिताय मौलिना विनतेनाञ्जलिमञ्जनत्विषे ।
कलयामि विमुग्धवल्लवीवलयाभाषितमञ्जुवेणवे ॥ १५

जयति ललितवृत्तिं शिक्षितो वल्लवीनां शिथिलवलयशिञ्जाशीतलैर्हस्ततालैः ।
अखिलभुवनरक्षागोपवेषस्य विष्णोः अधरमणिसुधायामंशवान्वंशनालः ॥ १६

चित्राकल्पः श्रवसि कलयन् लाङ्गलीकर्णपूरं
बर्होत्तंसस्फुरितचिकुरो बन्धुजीवं दधानः ।
गुञ्जाबद्धामुरसि ललितां धारयन् हारयष्टिं
गोपस्त्रीणां जयति कितवः कोऽपि कौमारहारी ॥ १७

लीलायष्टिं करकिसलये दक्षिणे न्यस्य धन्यां
अंसे देव्याः पुलकरुचिरे सन्निविष्टान्यबाहुः ।
मेघश्यामो जयति ललितो मेखलादत्तवेणुः
गुञ्जापीडस्फुरितचिकुरो गोपकन्याभुजङ्गः ॥ १८

प्रत्यालीढस्थितिमुपगतां प्राप्तगाढाङ्गपालिं
पश्चादीषन्मिलितनयनां प्रेयसीं प्रेक्षमाणः ।
भस्त्रायन्त्रप्रणिहितकरो भक्तजीवातुरव्यात्
वारिक्रीडानिबिडवसनो वल्लवीवल्लभो नः ॥ १९

वासो हृत्वा दिनकरसुतासन्निधौ वल्लवीनां
लीलास्मेरो जयति ललितामास्थितः कुन्दशाखाम् ।

सव्रीडाभिस्तदनु वसने ताभिरभ्यर्थ्यमाने
कामी कश्चित् करकमलयोरञ्जलिं याचमानः ॥ २०

इत्यनन्यमनसा विनिर्मितां वेङ्कटेशकविना स्तुतिं पठन् ।
दिव्यवेणुरसिकं समीक्षते दैवतं किमपि यौवतप्रियम् ॥ २१

इति कवितार्किकसिंहस्य...कृतिषु गोपालविंशतिस्संपूर्णा ॥

कवितार्किकसिंहाय...वेदान्तगुरवे नमः ॥

—:* * *:—

श्रीमन्निगमान्तमहादेशिक विरचितं

## कामासिकाष्टकम्

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्ताम् सदा हृदि ॥

श्रुतीनामुत्तरं भागं वेगवत्याश्च दक्षिणम् ।
कामादधिवसन् जीयात् कश्चिदद्भुतकेसरी ॥ १

तपनेन्द्वग्निनयनः तापानपचिनोतु नः ।
तापनीयरहस्यानां सारः कामासिकाहरिः ॥ २

आकण्ठमादिपुरुषं कण्ठीरवमुपरि कुण्ठितारातिम् ।
वेगोपकण्ठसङ्गात् विमुक्तवैकुण्ठबहुमतिमुपासे ॥ ३

बन्धुमखिलस्य जन्तोः बन्धुरपर्यङ्कबन्धरमणीयम् ।
विषमविलोचनमीडे वेगवतीपुलिनकेलिनरसिंहम् ॥ ४

स्वस्थानेषु मरुद्गणान्नियमयन् स्वाधीनसर्वेन्द्रियः
पर्यङ्कस्थिरधारणाप्रकटित प्रत्यङ्मुखावस्थितिः ।
प्रायेण प्रणिपेदुषां प्रभुरसौ योगं निजं शिक्षयन्
कामानातनुतादशेषजगतां कामासिकाकेसरी ॥ ५

विकस्वरनखस्वरुक्षतहिरण्यवक्षःस्थलीनिरर्गळविनिर्गळद्रुधिरसिन्धुसन्ध्यायिताः ।
अवन्तु मदनासिकामनुजपञ्चवक्त्रस्य मामहंप्रथमिकामिथःप्रकटिताहवाबाहवः ॥

सटापटलभीषणे सरभसाट्टहासोद्भटे स्फुरत्क्रुधि परिस्फुटद्भ्रुकुटिकेऽपि वक्त्रीकृते ।
कृपाकपटकेसरिन् दनुजडिंभदत्तस्तना सरोजसदृशा दृशा व्यतिभिषज्यते व्यज्यते
त्वयि रक्षति रक्षकैः किमन्यैः त्वयि चारक्षति रक्षकैः किमन्यैः ।
इति निश्चितधीः श्रयामि नित्यं नृहरे वेगवतीतटाश्रयं त्वाम् ॥ ८

इत्थं स्तुतः सकृदिहाष्टभिरेष पद्यैः
श्रीवेङ्कटेशरचितैः त्रिदशेन्द्रवन्द्यः ।
दुर्दान्तघोरदुरितद्विरदेन्द्र भेदी
कामासिकानरहरि र्वितनोतु कामम् ॥ ९

इति कवितार्किकसिंहस्य—कृतिषु कामासिकाष्टकं संपूर्णम् ॥

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

—: *···* :—

श्रीमन्निगमान्तमहादेशिकविरचितं अष्टभुजाष्टकम् ॥

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

गजेन्द्ररक्षात्वरितं भवन्तं ग्राहैरिवाहं विषयैर्विकृष्टः ।
अपारविज्ञान दयानुभावं आप्तं सतामष्टभुजं प्रपद्ये ॥ १
त्वदेकशेषोऽहमनात्मतन्त्रः त्वत्पादलिप्सां दिशता त्वयैव ।
असत्समोऽप्यष्टभुजास्पदेश सत्तामिदानीमुपलम्भितोऽस्मि ॥ २
स्वरूपरूपास्त्रविभूषणाद्यैः परत्वचिह्नैस्त्वयि दुर्निवाराम् ।
भेदं मुकुन्दकमलामभीप्सन् शीलादिभि र्वारयसीव पुंसाम् ॥ ३
इति शास्त्रान्तरशब्दभाजां सारं च सन्त्यज्य फलान्तराणाम् ।
त्वत्सात्कृतोऽस्म्यपि निर्भिदन्तः स्वस्तात्मनां नाथ बिभर्षि भारम् ॥ ४
अभीतिहेतोरनुवर्तनीयं नाथ त्वदन्यं न विभावयामि ।
भयं कुतस्स्यात् त्वयि सानुकम्पे रक्षा कुतस्स्यात् त्वयि जातरोषे ॥ ५
त्वदेकतन्त्रं कमलासहाय स्वेनैव मां रक्षितुमर्हसि त्वम् ।
त्वयि प्रवृत्ते मम किं प्रयासैः त्वय्यप्रवृत्ते मम किं प्रयासैः ॥ ६

समाधिभङ्गेष्वपि संवत्सु शरण्यभूते त्वयि बद्धकक्ष्ये ।
अपत्रपे सोढुमकिञ्चनोऽहं दूराधिरोहं पतनं च नाथ ॥ ७

प्राप्ताभिलाषं त्वदनुग्रहान्मां पद्मानिषेव्ये तव पादपद्मे ।
आदेहपातादपराधदूर मात्मान्तकैङ्कर्यरसं विधेयाः ॥ ८

प्रपन्नजनपाथेयं प्रपित्सूनां रसायनम् ।
श्रेयसे जगतामेतत् श्रीमदष्टभुजाष्टकम् ॥ ९

शरणागतसन्त्राणत्वरोद्विगुणबाहुना ।
हरिणा वेङ्कटेशीया स्तुतिस्स्वीक्रियतामियम् ॥ १०

इति कवितार्किकसिंहस्य...कृतिषु अष्टभुजाष्टकं सम्पूर्णम् ॥

कवितार्किकसिंहाय...वेदान्तगुरवे नमः ॥

—:****:—

श्रीमन्निगमान्तमहादेशिकविरचिता परमार्थस्तुतिः ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

श्रीमद्गृध्रसरस्तीरपारिजातमुपास्महे ।
यत्र तुङ्गैरतुङ्गैश्च प्रणतैर्गृह्यते फलम् ॥ १

गुरुभिस्त्वदनन्यसर्वभावैः गुणसिन्धौ कृतसंप्लवस्त्वदीये ।
रणपुङ्गव वन्दिभावमिच्छ न्नहमस्म्येकमनुग्रहास्पदं ते ॥ २

भुवनाश्रयभूषणास्त्रवर्गं मनसि त्वन्मयतां ममातनोतु ।
वपुराहवपुङ्गव त्वदीयं महिषीणामनिमेषदर्शनीयम् ॥ ३

अभिरक्षितुमग्रतस्स्थितं त्वां प्रणवे पार्थरथे च भावयन्तः ।
अहितप्रशमैरयत्नलभ्यैः कथयन्त्याहवपुङ्गवं गुणज्ञाः ॥ ४

कमला निरपायधर्मपत्नी करुणाद्याः स्वयमृत्विजो गुणास्ते ।
अवनं श्रयतामहीनमाद्यं सच धर्मस्त्वदनन्यसेवनीयः ॥ ५

कृपणाः सुधियः कृपासहायं शरणं त्वां रणपुङ्गव प्रपन्नाः ।
अपवर्गनयाऽनन्यभावाः वरिवस्यारसमेकमाद्रियन्ते ॥ ६
अवधीर्य चतुर्विधं पुमर्थं भवदर्थे विनियुक्तजीवितस्सन् ।
लभते भवतः फलानि जन्तुः निखिलान्यत्र निदर्शनं जटायुः ॥ ७
शरणागतरक्षणव्रती मां न विहातुं रणपुङ्गवार्हसि त्वम् ।
विदितं भुवने विभीषणो वा यदि वा रावण इत्युदीरितं ते ॥ ८
भुजगेन्द्रगरुत्मदादिलभ्यैः त्वदनुज्ञानुभवप्रवाहभेदैः ।
स्वपदे रणपुङ्गव स्वयं मे परिचर्याविभवैः परिष्क्रियेथाः ॥ ९
विमलाशयवेङ्कटेशजन्मा रमणीया रणपुङ्गवप्रसादात् ।
अनसूयुभिरादरेण भाव्या परमार्थस्तुतिरन्वहं प्रपन्नैः ॥ १०

इति कवितार्किकसिंहस्य--कृतिषु परमार्थस्तुतिः संपूर्णा ॥

कवितार्किकसिंहाय ...वेदान्तगुरवे नमः ॥

—:****:—

श्रीमान् वेङ्कटनाथार्यः...सन्निधत्तां सदा हृदि ॥

श्रीमन्निगमान्तमहादेशिकविरचिता भूस्तुतिः ॥

सङ्कल्पकल्पलतिकामवधिं क्षमायाः(माया) स्वेच्छावराहमहिषीं सुलभानुकम्पाम् ।
विश्वस्य मातरमकिञ्चनकामधेनुं विश्वम्भरामशरणः शरणं प्रपद्ये ॥ १
त्वं व्याहृतिः प्रथमतः प्रणवः प्रियं ते संवेदयन्त्यखिलमन्त्रगणस्तमेव ।
इत्थं प्रतीतविभवामितरैरिदानीं स्तोतुं यथावदवने क इवार्हति त्वाम् ॥ २
नित्यं हिताहितविपर्ययबद्धभावे त्वद्वीक्षणैकविनिवर्त्यबहुव्यपाये ।
मुग्धाक्षरैरखिलधारिणि मोदमाना मातः स्तनन्धयवियं मयि वर्तयेथाः ॥ ३
सङ्कल्पकिङ्करचराचरचक्रवाळं सर्वातिशायिनमनन्तशयस्य पुंसः ।
भूमानमात्मविभवैः पुनरुक्तयन्ती वाचामभूमिरपि भूमिरसि त्वमेका ॥ ४

वेधस्तृणावधि विहारपरिच्छदं ते विश्वं चराचरतया व्यतिभिद्यमानम् ।
अम्ब त्वदाश्रिततया परिपोषयन्ती विश्वम्भरस्य दयिताऽसि तदेकनामा ॥ ५
सर्वंसहेत्यवनिरित्यचलेति मातः विश्वम्भरेति विपुलेति वसुन्धरेति ।
अन्यानि चान्यविमुखान्यभिधानवृत्त्या नामान्यमूनि कथयन्ति तवानुभावम् ॥
तापान्क्षिपन्प्रसवितासुमनोगणानां प्रच्छायशीतलतलः प्रदिशन् फलानि ।
त्वत्सङ्गमाद्भवति माधवि लब्धपोषः शाखाशतैरधिगतो हरिचन्दनोऽसौ ॥ ७
स्मेरेण वर्धितरसस्य मुखेन्दुना ते निष्पन्दतां विजहतो निजया प्रकृत्या ।
विश्रान्तभूमिरसि तत्वतरङ्गपङ्क्तेः वेलेव विष्णुजलधेरपृथग्भवन्ती ॥ ८
स्वाभाविके वसुमति श्रुतिभिर्विभाव्ये पत्युर्महिम्नि भवतीं प्रतिपन्नवासाम् ।
शङ्के विमानवहनप्रतिभासमानाः स्तम्बेरमप्रभृतयोऽपि वहन्ति सत्वाः ॥ ९
सम्भावयन्मधुरिपुः प्रणयानुरोधात् वक्षस्स्थलेन वरुणालयराजकन्याम् ।
विश्वम्भरे बहुमुखप्रतिपन्नभोगः शेषात्मना तु भवतीं शिरसा दधाति ॥ १०
क्रीडावराहदयिते कृतिनः क्षितीन्द्राः संक्रन्दनस्तदितरेऽपि दिशामधीशाः ।
आमोदयन्ति भुवनान्यलकाश्रिताना मंब त्वदङ्घ्रिरजसां परिणामभेदैः ॥ ११
भूतेषु यत्त्वदभिमानविशेषपात्रं पोषं तदेव भजतीति विभावयन्तः ।
भूतं प्रभूतगुणपञ्चकमाद्यमे(तत्) व प्रायो निदर्शनतया प्रतिपादयन्ति ॥ १२
कान्तस्तवैष करुणाजलधिः प्रजानां आज्ञाऽतिलङ्घनवशादुपजातरोषः ।
अह्नाय विश्वजननि क्षमया भवत्या सर्वावगाहनसहामुपयात्यवस्थाम् ॥ १३
आश्वासनाय जगतां पुरुषे परस्मिन्नापन्नरक्षणदशामभिनेतुकामे ।
अन्तर्हितेतरगुणादबलास्वभावात औदन्वते पयसि मज्जनमभ्यनैषीः ॥ १४
पूर्वं वराहवपुषा पुरुषोत्तमेन प्रीतेन भोगिसदने समुदीक्षितायाः ।
पादाहताः प्रलयवारिधयस्तवासन उद्वाहमङ्गलविधेरुचिता मृदङ्गाः ॥ १५
व्योमातिलङ्घिनि विभोः प्रलयाम्बुराशौ वेशन्तलेश इव मातुमशक्यमूर्तेः ।
सद्यस्समुद्रवसने सरसैरकार्षीरानन्दसागरमपारमपाङ्गपातैः ॥ १६
दंष्ट्राविदारितमहासुरशोणिताङ्कैरङ्गैः प्रियस्तव दधे परिरम्भलीलाम् ।
सा ते पयोधिजलकेलिसमुत्थितायाः सैरन्ध्रिकेव विदधे नवमङ्गरागम् ॥ १७

अन्योन्यसंवलनजृम्भिततूर्यघोषैः संवर्तसिन्धुसलिलैर्विहिताभिषेका ।
एकातपत्रयसि विश्वमिदं गुणैस्स्वैरध्यास्य भर्तुरधिकोन्नतमंसपीठम् ॥ १८
भर्तुस्तमालरुचिरे भुजमध्यभागे पर्यायमौक्तिकवती पृषतैः पयोधेः ।
तापानुबन्धशमनी जगतां त्रयाणां तारापथे स्फुरसि तारकिता निशेव ॥ १९
आसक्तवासवशरासनपल्लवैस्त्वां संवृद्धये शुभतटिद्गुणजालरम्यैः ।
देवेशदिव्यमहिषीं धृतसिन्धुतोयैः जीमूतरत्नकलशैरभिषिञ्चति द्यौः ॥ २०
आविर्मदैरमरदन्तिभिरुह्यमानां रत्नाकरेण रुचिरां रशनागुणेन ।
मातस्त्रिलोकजननीं वनमालिनीं त्वां मायावराहमहिषीमवयन्ति सन्तः ॥ २१
निष्कण्टकप्रशमयोगनिषेवणीयां छायाविशेषपरिभूतसमस्ततापाम् ।
स्वर्गापवर्गसरणिं भवतीमुशन्ति स्वच्छन्दसूकरवधूमवधूतपङ्काम् ॥ २२
गण्डोज्ज्वलां गहनकुन्तलदर्शनीयां शैलस्तनीं तरलनिर्झरलम्बहाराम् ।
श्यामां स्वतस्त्रियुगसूकरगेहिनि त्वं व्यक्तिं समुद्रवसनामुभयीं बिभर्षि ॥ २३
निस्संशयैर्निगमसीमनि विष्णुपत्नि प्रख्यापितं भृगुमुखैर्मुनिभिः प्रतीतैः ।
पश्यन्त्यनन्यपरधीरसंसंस्तुतेन सन्तः समाधिनयनेन तवानुभावम् ॥ २४
संचोदिता करुणया चतुरः पुमर्थान् व्यातन्वती विविधमन्त्रगणोपगीता ।
संचिन्त्यसे वसुमति स्थिरभक्तिबन्धैः अन्तर्बहिश्च बहुधा प्रणिधानदक्षैः ॥ २५
क्रीडागृहीतकमलादिविशेषचिह्नां विश्राणिताभयकरां वसुधे सभूतिम् ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां संचिन्तयन् हि लभते धनदाधिकारम् ॥
उद्वेलकल्मषपरंपरितादमर्षात् उत्तंसितेन हरिमञ्जलिनाप्यधृष्यम् ।
आकस्मिकोऽयमधिगम्ययति प्रजानां अम्ब त्वदीयकरुणापरिणाम एव ॥ २७
प्रत्येकमब्दनियुतैरपि दुर्व्यपोहात् प्राप्ते विपाकसमये जनितानुतापात् ।
नित्यापराधनिवहाच्चकितस्य जन्तोः गन्तुं मुकुन्दचरणौ शरणं क्षमे त्वम् ॥
त्राणाभिसन्धिसुभगेऽपि सदा मुकुन्दे संसारतन्त्रवहनेन विलंबमाने ।
रक्षाविधौ तनुभृतामनघानुकम्पा मातः स्वयं वितनुषे महतीमपेक्षाम् ॥ २९
धर्मद्रुहं सकलदुष्कृतिसार्वभौम मात्मानभिज्ञमनुतापलवोज्झितं माम् ।
वैतानसूकरपतेश्चरणारविन्दे सर्वसहे ननु समर्पयितुं क्षमा त्वम् ॥ ३०

तापत्रयीं निरवधिं भवतीदयार्द्राः संसारघर्मजनितां सपदि क्षिपन्तः ।
मातर्भजन्तु मधुरामृतवर्षमैत्रीं मायावराहदयिते मयि ते कटाक्षाः ॥ ३१

पत्युर्दक्षिणपादपङ्कजपुटे विन्यस्तवामाम्बुजा
वामं पन्नगसार्वभौमसदृशं पर्यङ्कयन्ती भुजम् ।
पोत्रस्पर्शलसत्कपोलपुलका फुल्लारविन्देक्षणा
सा मे पुष्यतु मङ्गलान्यनुदिनं सर्वाणि सर्वंसहा ॥ ३२

अन्येशाना जगत इति या श्रूयते विष्णुपत्नी
तस्याः स्तोत्रं विरचितमिदं वेङ्कटेशेन भक्त्या ।
श्रद्धाभक्तिप्रचयगुरुणा चेतसा संस्तुवानो
यद्यत्कामंस्सपदि लभते तत्तदत्र प्रतिष्ठाम् ॥ ३३

— इति...भूस्तुतिः संपूर्णा —

कवितार्किकसिंहाय—वेदान्त गुरवे नमः

## गोदास्तुतिः

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

श्रीविष्णुचित्तकुलनन्दनकल्पवल्लीं श्रीरङ्गराजहरिचन्दनयोगदृश्याम् ।
साक्षात्क्षमां करुणया कमलामिवान्यां गोदामनन्यशरणश्शरणं प्रपद्ये ॥ १

वैदेशिकः श्रुतिगिरामपि भूयसीनां वर्णेषु माति महिमा नहि मादृशां ते ।
इत्थं विदन्तमपि मां सहसैव गोदे मौनद्रुहो मुखरयन्ति गुणास्त्वदीयाः ॥ २

त्वत्प्रेयसश्श्रवणयोरमृतायमानां तुल्यां त्वदीयमणिनूपुरशिञ्जितानाम् ।
गोदे त्वमेव जननि त्वदभिष्टवार्हां वाचं प्रसन्नमधुरां मम संविधेयाः ॥ ३

कृष्णान्वयेन दधतीं यमुनानुभावं तीर्थैर्यथावदवगाह्य सरस्वतीं ते ।
गोदे विकस्वरधियां भवतीकटाक्षाद्वाचः स्फुरन्ति मकरन्दमुचः कवीनाम् ॥ ४

अस्मादृशामपकृतौ चिरदीक्षितानामह्नाय देवि दयते यदसौ मुकुन्दः ।
तन्निश्चितं नियमितस्तव मौलिदाम्ना तन्त्रीनिनादमधुरैश्च गिरां निगुम्भैः ॥ ५

शोणाऽधरेऽपि कुचयोरपि तुङ्गभद्रा वाचां प्रवाहनिवहेऽपि सरस्वती त्वम् ।
अप्राकृतैरपि रसैर्विरजास्वभावात् गोदाऽपि देवि कमितुर्ननु नर्मदाऽसि ॥ ६

वल्मीकतश्श्रवणतो वसुधात्मनस्ते जातो बभूव स मुनिः कविसार्वभौमः ।
गोदे किमद्भुतमिदं यदमी स्वदन्ते वक्त्रारविन्दमकरन्दनिभाः प्रबन्धाः ॥ ७

भोक्तुं तव प्रियतमं भवतीव गोदे भक्तिं निजां प्रणयभावनया गृणन्तः ।
उच्चावचैर्विरहसङ्गमजैरुदन्तैः शृङ्गारयन्ति हृदयं गुरवस्त्वदीयाः ॥ ८

मातस्समुत्थितवतीमधिविष्णुचित्तं विश्वोपजीव्यममृतं वचसा दुहानाम् ।
तापच्छिदं हिमरुचेरिव मूर्तिमन्यां सन्तः पयोधिदुहितुस्सहजां विदुस्त्वाम् ॥ ९

तातस्तु ते मधुभिदः स्तुतिलेशवश्यात् कर्णामृतैः स्तुतिशतैरनवाप्तपूर्वम् ।
त्वन्मौलिगन्धसुभगामुपहृत्य मालां लेभे महत्तरपदानुगुणं प्रसादम् ॥ १०

दिग्दक्षिणाऽपि परिपक्त्रिमपुण्यलभ्यात् सर्वोत्तरा भवति देवि तवावतारात् ।
यत्रैव रङ्गपतिना बहुमानपूर्वं निद्रालुनाऽपि नियतं निहिताः कटाक्षाः ॥ ११

प्रायेण देवि भवतीव्यपदेशयोगाद्गोदावरी जगदिदं पयसा पुनीते ।
यस्यां समेत्य समयेषु चिरं निवासात् भागीरथीप्रभृतयोऽपि भवन्ति पुण्याः ॥

नागेशयः सुतनु पक्षिरथः कथं ते जातस्स्वयंवरपतिः पुरुषः पुराणः ।
एवंविधास्समुचितं प्रणयं भवत्याः संदर्शयन्ति परिहासगिरस्सखीनाम् ॥ १३

त्वद्भुक्तमाल्यसुरभीकृतचारुमौलेः हित्वा भुजान्तरगतामपि वैजयन्तीम् ।
पत्युस्तवेश्वरि मिथःप्रतिघातलोलाः बर्हातपत्ररुचिमारचयन्ति भृङ्गाः ॥ १४

आमोदवत्यपि सदा हृदयङ्गमाऽपि रागान्विताऽपि ललिताऽपि गुणोत्तराऽपि ।
मौलिस्रजा तव मुकुन्दकिरीटभाजा गोदे भवत्यधरिता खलु वैजयन्ती ॥ १५

त्वन्मौलिदामनि विभोश्शिरसा गृहीते स्वच्छन्दकल्पितसपीतिरसप्रमोदाः ।
मञ्जुस्वना मधुलिहो विदधुस्स्वयं ते स्वायंवरं कमपि मङ्गलतूर्यघोषम् ॥ १६

विश्वायमानरजसा कमलेन नाभौ वक्षस्स्थले च कमलास्तनचन्दनेन ।
आमोदितोऽपि निगमैर्विभुरङ्घ्रियुग्मे धत्ते नतेन शिरसा तव मौलिमालाम् ॥

चूडापदेन परिगृह्य तवोत्तरीयं मालामपि त्वदलकैरधिवास्य दत्ताम् ।
प्रायेण रङ्गपतिरेष बिभर्ति गोदे सौभाग्यसम्पदभिषेकमहाधिकारम् ॥ १८
तुङ्गैरकृत्रिमगिरस्स्वयमुत्तमाङ्गैः यं सर्वगन्ध इति सादरमुद्वहन्ति ।
आमोदमन्यमधिगच्छति मालिकाभिः सोऽपि त्वदीयकुटिलालकवासिताभिः ॥
धन्ये समस्तजगतां पितुरुत्तमाङ्गे त्वन्मौलिमाल्यभरसम्भरणेन भूयः ।
इन्दीवरस्रजमिवादधति त्वदीयान्याकेकराणि बहुमानविलोकितानि ॥ २०
रङ्गेश्वरस्य तव च प्रणयानुबन्धादन्योन्यमाल्यपरिवृत्तिमभिष्टुवन्तः ।
वाचालयन्ति वसुधे रसिकास्त्रिलोकीं न्यूनाधिकत्वसमताविषयैर्विवादैः ॥ २१
दूर्वादलप्रतिमया तव देहकान्त्या गोरोचनारुचिरया च रुचेन्दिरायाः ।
आसीदनुज्झितशिखावळकण्ठशोभं माङ्गल्यदं प्रणमतां मधुवैरिगात्रम् ॥ २२
अर्च्यं समर्च्य नियमैर्निगमप्रसूनैः नाथं त्वया कमलया च समेयिवांसम् ।
मातश्चिरं निरविशन्निजमाधिराज्यं मान्या मनुप्रभृतयोऽपि महीक्षितस्ते ॥ २३
आर्द्रापराधिनि जनेऽप्यभिरक्षणार्थं रङ्गेश्वरस्य रमया विनिवेद्यमाने ।
पार्श्वे परत्र भवती यदि तत्र नासीत्प्रायेण देवि वदनं परिवर्तितं स्यात् ॥ २४
गोदे गुणैरपनयन्प्रणतापराधान् भ्रूक्षेप एव तव भोगरसानुकूलः ।
कर्मानुबन्धिफलदानरतस्य भर्तुः स्वातन्त्र्यदुर्व्यसनमर्मभिदानिदानम् ॥ २५
रङ्गे तटिद्गुणवतो रमयैव गोदे कृष्णाम्बुदस्य घटितां कृपया सुवृष्ट्या ।
दौर्गत्यदुर्विषविनाशसुधानदीं त्वां सन्तः प्रपद्य शमयन्त्यचिरेण तापान् ॥ २६
जातापराधमपि मामनुकम्प्य गोदे गोप्त्री यदि त्वमसि युक्तमिदं भवत्याः ।
वात्सल्यनिर्भरतया जननी कुमारं स्तन्येन वर्धयति दष्टपयोधराऽपि ॥ २७

शतमखमणिनीला चारुकल्हारहस्ता
स्तनभरनमिताङ्गी सान्द्रवात्सल्यसिन्धुः ।
अलकविनिहिताभिः स्रग्भिराकृष्टनाथा
विलसतु हृदि गोदा विष्णुचित्तात्मजा नः ॥ २८

इति विकसितभक्तेरुत्थितां वेङ्कटेशात्
बहुगुणरमणीयां वक्ति गोदास्तुतिं यः ।

स भवति बहुमान्यः श्रीमतो रङ्गभर्तुः
चरणकमलसेवां शाश्वतीमभ्युपैष्यन् ॥ २९

इति कवितार्किकसिंहस्य—श्रीमद्वेदान्ताचार्यस्य कृतिषु
गोदास्तुतिः सम्पूर्णा ॥

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

श्रीमन्निगमान्त महा देशिक विरचिता
## शरणागतिदीपिका

श्रीमान्वेंकटनाथार्यः—सन्निधत्तां सदा हृदि ॥

पद्मापदे स्तुतिपदेन विपच्यमानं पश्यन्त्विह प्रपदनप्रवणा महान्तः ।
मद्वाक्यसंवलितमप्यजहत्स्वभावं मान्यं यतीश्वरमहानस संप्रदायम् ॥ १
नित्यं श्रिया वसुधयाच निषेव्यमाणं निर्व्याजनिर्भरदयाभरितं विभाति ।
वेदान्तवेद्यमिह वेगवतीसमीपे दीपप्रकाश इति दैवतमद्वितीयम् ॥ २
दीपस्त्वमेव जगतां दयिता रुचिस्ते दीर्घं तमः प्रतिनिवृत्त्य भिदं युवाभ्याम् ।
स्तव्यं स्तवप्रियतमं शरणोक्तिवश्यं स्तोतुं भवन्तमभिवाञ्छति जन्तुरेषः ॥ ३
पद्माकरादुपगता परिषस्वजे त्वां वेगासरिद्विहरणा कलशाब्धिकन्या ।
आहुस्तदाप्रभुति दीपसमावभासमाजानतो मरतकप्रतिमं वपुस्ते ॥ ४
स्वामिन् गभीरसुभगं श्रमहारि पुंसां माधुर्यरम्यमनघं मणिभङ्गदृश्यम् ।
वेगान्तरे वितनुते प्रतिबिम्बशोभां लक्ष्मीसरः सरसिजाश्रय मङ्कं ते ॥ ५
आविश्य धारयसि विश्व ममुष्य यन्ता शेषी श्रियःपतिरशेषतनुर्निदानम्
इत्यादिलक्षणगुणैः पुरुषोत्तमं त्वां जानाति यो जगति सर्वविदेव गीतः ॥ ६
विश्वं शुभाश्रयवदीश वपुस्त्वदीयं सर्वा गिरस्त्वयि पतन्ति ततोऽसि सर्वः
सर्वे च वेदविषयस्त्वदनुग्रहार्थाः सर्वाधिकस्त्वमिति तत्वविदस्तदाहुः ॥ ७

ज्ञानं बलं नियमनक्षमताऽथ वीर्यं शक्तिश्च तेज इति ते गुणषट्कमाद्यम् ।
सर्वातिशायिनि हिमोपवनेश यस्मिन्नन्तर्गतो जगदिव त्वयि सद्गुणौघः ॥ ८

दीपावभास दयया विधिपूर्वमेतद्विश्वं विधाय निगमानपि दत्तवन्तम् ।
शिष्यायिताश्शरणयन्ति मुमुक्षवस्त्वामाद्यं गुरुं गुरुपरम्परयाऽभिगम्यम् ॥ ९

सत्तास्थितिप्रयतनप्रमुखैरुपात्तं स्वार्थं सदैव भवता स्वयमेव विश्वम् ।
दीपप्रकाश तदिह त्वदवाप्तये त्वामव्याजसिद्धमनपायमुपायमाहुः ॥ १०

भोग्यं मुकुन्द गुणभेदमचेतनेषु भोक्तृत्वमात्मनि निवेश्य निजेच्छयैव ।
पाञ्चालिकाशुकविभूषणभोगदायी सम्राडिवात्मसमया सह मोदसे त्वम् ॥ ११

त्वां मातरं च पितरं सहजं निवासं सन्तस्समेत्य शरणं सुहृदं गतिं च ।
निस्सीमनित्यनिरवद्यसुखप्रकाशं दीपप्रकाश सविभूतिगुणं विशन्ति ॥ १२

जन्तोरमुष्य जनने विधिशम्भुदृष्टौ रागादिनैव रजसा तमसा च योगः ।
द्वैपायनप्रभृतयःत्वदवेक्षितानां सत्त्वं विमुक्तिनियतं भवतीत्युशन्ति ॥ १३

कर्मस्वनादिविषमेषु समो दयालुः स्वेनैव कॢप्तमुपदेशमवेक्षमाणः ।
स्वप्राप्तये तनुभृतां त्वरसे मुकुन्द स्वाभाविकं तव सुहृत्त्वमिदं गृणंति ॥ १४

निद्रायितान्निगमवर्त्मनि चारुदर्शी प्रस्थानशक्तिरहिताः प्रतिबोध्य जन्तून् ।
जीर्णस्तनन्धयजडान्धमुखानिवास्मान्नेतुं मुकुन्द यतसे दयया सह त्वम् ॥ १५

भक्तिप्रपत्तिरथवा भगवंस्तदुक्तिस्तन्निष्ठसंश्रय इतीव विकल्प्यमानम् ।
यंकञ्चिदेकमुपपादयता त्वयैव त्रातस्तरन्त्यवसरे भविनो भवाब्धिम् ॥ १६

नानाविधैरकपटैरजहत्स्वभावैरप्राकृतैर्निजविहारवशेन सिद्धैः ।
आत्मीयरक्षणविपक्षविनाशनार्थैः संस्थापयस्यनघजन्मभिरार्यधर्मम् ॥ १७

निर्लेपनानि निखिलानि पदानि गाढं मज्जन्ति ते महिमसागरशीकरेषु ।
नीरन्ध्रमाश्रयसि नीचजनांस्तथापि शीलेन हन्त शिशिरोपवनेश्वरस्त्वम् ॥ १८

काशीवृकान्धकशरासनबाणगङ्गासम्भूतिनामकृतिसंवदनाद्युदन्तैः ।
स्वोक्त्याऽम्बरीषभयशापमुखैश्च शम्भुं त्वन्निम्नमीक्षितवतामिह कश्शरण्यः ॥

कासौ विभुः क्व वयमित्युपसत्तिभीतान् जन्तून्क्षणात्त्वदनुवृत्तिषु योग्ययंती ॥
संप्राप्त सद्गुरुतनोस्समये दयालोरात्मावधिर्भवति संस्कृतधीः क्षणं ते ॥ २०

योग्यं यमैश्च नियमैश्च विधाय चित्तं संतो जितासनतया स्ववशासुवर्गाः ।
प्रत्याहृतेन्द्रियगणास्स्थिरधारणास्त्वां ध्यात्वा समाधियुगलेन विलोकयन्ति ॥
पद्माभिरामवदनेक्षणपाणिपादं दिव्यायुधाभरणमाल्यविलेपनं त्वाम् ।
योगेन नाथ शुभमाश्रयमात्मवन्तस्सालम्बनेन परिचिन्त्य नयान्ति तृप्तिम् ॥ २२
मानातिलङ्घिसुखबोध महांबुराशिमग्नास्त्रिसीमरहिते भवतः स्वरूपे ।
तादत्र्येण विहतिं नभजन्ति भूयस्संसारघर्मजनितेन समाधिमन्तः ॥ २३
धीसंस्कृतान् विदधतामिह कर्मभेदान्शुद्धं जितेमनसि चिन्तयतां स्वमेकम् ।
त्वत्कर्मसक्तमनसामपि चापरेषां सूतेफलान्यभिमतानि भवान् प्रसन्नः ॥ २४
उद्बाहुभावमपहाय यथैवखर्वः प्रांशुःफलं समभियाचत योगिचिन्त्य ।
एवं सुदुष्करमुपायगणं विहाय स्थाने निवेशयति तस्य विचक्षणस्त्वाम् ॥ २५
नित्यालसार्हमभयं निरवेक्षमन्यैर्विश्वाधिकार मखिलाभिमत प्रसूतिम् ।
शिक्षाविशेषसुलभं व्यवसायसिद्धास्सत्कुर्वते त्वयि मुकुन्द षडङ्गयोगम् । २६
त्वत्प्रातिकूल्यविमुखास्स्फुरदानुकूल्याः कृत्वा पुनः कृपणतां विगतातिशङ्काः ।
स्वामिन् भव स्वय मुपाय इतीरयंतस्त्वय्यर्पयंति निजभारमपारशक्तौ ॥ २७
अर्थांतरेषु विमुखा नधिकारहानेः श्रद्धाधिकांस्त्वदनुभूति विलंबभीतान् ।
दीपप्रकाश लभसे सुचिरात् कृतीव न्यस्तात्मनस्तवपदे निभृतान् प्रपन्नान् ॥
मन्त्रैरनुश्रवमुखेष्वधिगम्यमानैः स्वाधिक्रियासमुचितैः यदिवाऽन्यवाक्यैः ।
नाथ त्वदीयचरणौ शरणंगतानां नैवायुतायुतकलाप्यपरं रवाप्या ॥ २९
दत्ताः प्रजा जनकवत्तत्र देशिकेन्द्रैः पत्याभिनन्द्य भवता परिणीयमानाः ।
मध्ये सतां महितभोगविशेषसिध्यै माङ्गल्यसूत्रमिव बिभ्रति किङ्करत्वम् ॥ ३०
दिव्ये पदे दयित किङ्करताधिराज्यं दातुं त्वयैव दयया विहिताभिषेकाः ।
आदेहपातमनघाः परिचर्यया ते युञ्जानाचिन्त्य युवराजपदं भजन्ति ॥ ३१
त्वां पाञ्चरात्रिकनयेन पृथग्विधेन वैखानसेन च पथा नियताधिकाराः ।
संज्ञाविशेषनियमेन समर्चयन्तः प्रीत्या नयन्ति फलवान्ति दिनानि धन्याः ॥
वर्णाश्रमादिनियमस्थिरसूत्रबद्धा भक्त्या यथार्हविनिवेशितपत्रपुष्पा ।
मालेव कालविहिता हृदयंगमा त्वामामोदयत्यनुपरागधियां सपर्या ॥ ३३

ब्रह्मा गिरीश इतरेऽप्यमरा य एते निर्धूय तान्निरयतुल्यफलप्रसूतीन् ।
प्राप्तुं तवैव पदपद्मयुगं प्रतीताः पातिव्रतीं त्वयि भजन्ति परावरज्ञाः ॥ ३४
नाथ त्वदिष्टविनियोगविशेषसिद्धं शेषत्वसारमनपेक्ष्य निजं गुणज्ञाः ।
भक्तेषु ते वरगुणार्णव पारतन्त्र्याद्दास्यं भजन्ति विपणिव्यवहारयोग्यम् ॥ ३५
सद्भिस्त्वदेकशरणैर्नियतं सनाथाः सर्पादिवत्त्वदपराधिषु दूरयाताः ।
धीरास्तृणीकृतविरिञ्चिपुरन्दराद्याः कालं क्षिपन्ति भगवन्करणैरवन्ध्यैः ॥ ३६
रागादिकं मनसि तत्वचनेन सद्यो भूतेष्वपि पुनरसौ त्वयि तैस्समेति ।
साधारणोऽस्कन्दनकर्मसमाश्रितानां यन्त्रा मुकुन्द भवतैव यथा यमादेः ॥ ३७
सव्यान्ययोरयनयोर्निशि वासरे वा सङ्कल्पितायुरवधीन् सपदि प्रपन्नान् ।
हार्दस्स्वयं निजपदे विनिवेशयिष्यन्नाडीं प्रवेशयसि नाथ शताधिकां त्वम् ॥
अर्चिर्दिनं विशदपक्ष उदक्प्रयाणं संवत्सरो मरुदशीतकरश्शशाङ्कः ।
सौदामिनी जलपतिर्वरुणः प्रजेशः इत्यातिवाहिकसखो नयसि स्वकीयान् ॥
स्वच्छे स्ववृत्त्यनुगुणैर्महितैर्गुणौघैः आविर्भवत्ययुतसिद्धनिजस्वरूपे ।
त्वल्लक्षणेषु नियतेष्वपि भोगमात्रे साम्यं भजन्ति परमं भवता विमुक्ताः ॥ ४०
इत्थं त्वदेकशरणैरनघैरयाच्ये त्वत्किङ्करत्वविभवे स्पृहयाऽवराध्यन् ।
आत्मा ममेति भगवन्भवतैव गीता वाचो निरीक्ष्य भरणीय इहत्वयाऽहम् ॥
पञ्चामहीप्रभृतिभिः परिभुक्तभूम्नः का हानिरत्र मयि भोक्तरि ते भवित्री ।
दुष्येत्किमङ्घ्रितटिनी तव देवसव्या दुर्वारतर्षचपलेन शुनाऽवलीढा ॥ ४२
तत्त्वानि नाथ विविधान्यनुसंजिघृक्षोः संसारनाट्यरसिकस्य तवास्तु तृप्त्यै ।
प्रत्यक्पराङ्मुखमतेरसमीक्ष्यकर्तुः प्राचीनसज्जनविडम्बनभूमिका मे ॥ ४३
कर्तव्यमित्यनुकलं कलयाम्यकृत्यं स्वामिन्नकृत्यमिति कृत्यमपि त्यजामि ।
अन्यद्व्यतिक्रमणजातमनन्तमर्थस्थाने दया भवतु ते मयि सार्वभौमी ॥ ४४
यं पूर्वमाश्रितजनेषु भवान्यथावद्धर्मं परं प्रणिजगौ स्वयमानृशंस्यम् ।
संस्मारितस्त्वमसि तस्य शरण्यभावात् नाथ त्वदात्तसमया ननु मादृशार्थम् ॥
त्राणं भवेति सकृदुक्तिसमुद्यतानां तैस्तैरसह्यवृजिनैरुदरंभरिस्ते ।
सत्यापिता शतमखात्मजशंकरादौ नाथ क्षमा न खलु जन्तुषु मद्विवर्जम् ॥

कर्मादिषु त्रिषु कथां कथमप्यजानन् कामादिमेदुरतया कलुषप्रवृत्तिः ।
साकेतसम्भवचराचरजन्तुनीत्या वक्ष्यः प्रभो विषयवासितयाऽप्यहं ते ॥ ४७
ब्रह्माण्डलक्षशतकोटिगणाननन्तान् एकक्षणे विपरिवर्त्य विलज्जमानाम् ।
मत्पापराशिमथने मधुदर्पहन्त्रीं शक्तिं नियुङ्क्ष्व शरणागतवत्सल त्वम् ॥ ४८
आस्तां प्रपत्तिरिह देशिकसाक्षिका मे सिद्धा तदुक्तिरनघा त्वदवेक्षितार्था ।
न्यस्तस्य पूर्वनिपुणैस्त्वयि नन्विदानीं पूर्णे मुकुन्द पुनरुक्त उपायएषः ॥ ४९
यद्वा मदर्थपरिचिन्तनया तवालं संज्ञां प्रपन्न इति साहसिको बिभर्मि ।
एवं स्थिते त्वदपवादनिवृत्तये मां पात्रीकुरुष्व भगवन्भवतः कृपायाः ॥ ५०
त्यागे गुणेश शरणागत संज्ञिनोमे स्त्यनागसोपि सहरैव परिग्रहेवा ।
किं नाम कुत्र भवतीति कृपादिभिस्ते गूढं निरूपय गुणेतर तारतम्यम् ॥ ५१
स्वामी दयाजलनिधिर्मधुरः क्षमावान् शीलाधिकः श्रितवशश्शुचिरप्युदारः ।
एतानि हातुमनघो न किलार्हसि त्वं विख्यातधीरविरुदानि मया सहैव ॥ ५२
वेला धनंजयरथादिषु वाचिकैः स्वैराघोषितामखिललोकशरण्यतां ते ।
जानन्दशाननशतादधिकागसोऽपि पश्यामि दत्तमभयं स्वकृते त्वया मे ॥ ५३
रक्ष्यस्त्वया तव भरोस्म्यहमित्यपूर्वान् वर्णानिमानहृदयानपि वाचयित्वा ।
मद्दोषनिर्जितगुणो महिषीसमक्षं मा भूः त्वदन्य इव मोघपरिश्रमस्त्वम् ॥ ५४
मुख्यं च यत्प्रपदनं स्वयमेव साध्यं दातव्यमीश कृपया तदपि त्वयैव ।
तन्मे भवच्चरणसङ्गवतीमवस्थां पश्यन्नुपायफलयोरुचितं विधेयाः ॥ ५५
अल्पास्थिरैरसुकरैरसुखायसानैर्दुःखान्वितैरनुचितैरभिमानमूलैः ।
प्रत्यक्पराग नुभवैः परिपूर्णितं मां त्वय्येव नाथ चरितार्थय निर्विपक्षम् ॥ ५६
तत्त्वावबोधशमितप्रतिकूलवृत्तिं कैङ्कर्यलब्धकरणत्रयसामरस्यम् ।
कृत्वा त्वदन्यविमुखं कृपया स्वयं मां स्थापि दृशोः प्रतिलभस्व जगज्जनन्याः ॥
इत्थं स्तुतिप्रभृतयो यदि संमतास्स्युर्यद्वाऽपराधपदवीष्वभिसंविशन्ति ।
स्तोकानुकूल्यकणिकावशवर्तिनस्ते प्रीतिक्षमाप्रसरयोरहमास्मि लक्ष्यम् ॥ ५८
स्नेहोपपन्नविषयस्वदशाविशेषात् भूयस्तमिस्रशमनीं भुवि वेङ्कटेशः ।
दिव्यां स्तुतिं निरमिमीत सतां नियोगाद्दीपप्रकाशशरणागतिदीपिकाख्याम् ॥

(एतां दीपप्रकाशस्तुतिमिह रुचिरामित्थमभ्यस्यमानः
सम्यग्दृष्ट्वा शरण्यप्रभृतिनिगदितं न्यासविद्याख्यतत्त्वम् ।
प्रत्यासीदद्विमुक्तानुभवफलसमुद्भेदलब्ध्या कृतार्थः
प्राप्ते पिण्डस्य भेदे परिणमति परब्रह्मसब्रह्मचारी ॥)　　६०

इति कवितार्किकसिंहस्य—वेदान्ताचार्यस्य कृतिषु

शरणागतिदीपिका सम्पूर्णा ॥

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

श्रीमन्निगमान्तमहादेशिकविरचितं

## न्यासदशकम् ॥

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

अहं मद्रक्षणभरो मद्रक्षणफलं तथा ।
न मम श्रीपतेरेवेत्यात्यात्मानं निक्षिपेद्बुधः ॥　　१
न्यस्याम्यकिञ्चनश्श्रीमन्ननुकूलोऽन्यवर्जितः ।
विश्वासप्रार्थनापूर्वमात्मरक्षाभरं त्वयि ॥　　२
स्वामी स्वशेषं स्ववशं स्वभरत्वेन निर्भरम् ।
स्वदत्तस्वधिया स्वार्थं स्वस्मिन् न्यस्यति मां स्वयम् ॥　　३
श्रीमन्नभीष्टवरद त्वामस्मि शरणं गतः ।
एतद्देहावसाने मां त्वत्पादं प्रापय स्वयम् ॥　　४
त्वच्छेषत्वे स्थिरधियं त्वत्प्राप्त्यैकप्रयोजनम् ।
निषिद्धकाम्यरहितं कुरु मां नित्यकिङ्करम् ॥　　५
देवीभूषणहेत्यादिजुष्टस्य भगवंस्तव ।
नित्यं निरपराधेषु कैङ्कर्येषु नियुङ्क्ष्व माम् ॥　　६

मां मदीयं च निखिलं चेतनाचेतनात्मकम् ।
स्वकैङ्कर्योपकरणं वरद स्वीकुरु स्वयम् ॥ ७

त्वदेकरक्षस्य मम त्वमेव करुणाकर ।
न प्रवर्तय पापानि प्रवृत्तानि निवर्तय ॥ ८

अकृत्यानां च करणं कृत्यानां वर्जनं च मे ।
क्षमस्व निखिलं देव प्रणतार्तिहर प्रभो ॥ ९

श्रीमान्नियतपञ्चाङ्गं मद्रक्षणभरार्पणम् ।
अचीकरत्स्वयं स्वस्मिन्नतोऽहमिह निर्भरः ॥ १०

संसारावर्तवेगप्रशमनशुभदृग्दे (क्दे) शिकप्रेक्षितोऽहं
संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्य शान्ताभिसन्धिः ।
निश्शङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्रा (र्थ्य) प्य संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि ॥ ११

इति कवितार्किकसिंहस्य...वेदान्ताचार्यस्य कृतिषु

न्यासदशकं संपूर्णम् ॥

कवितार्किकसिंहाय—वेदान्त गुरवे नमः

---

श्रीमन्निगमान्तमहादेशिकविरचिता

सव्याख्या न्यासविंशतिः ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

सिद्धं सत्संप्रदाये स्थिरधियमनघं श्रोत्रियं ब्रह्मनिष्ठं
सत्त्वस्थं सत्यवाचं समयनियतया साधुवृत्त्या समेतम् ।
डम्भासूयादिमुक्तं जितविषयगणं दीर्घबन्धुं दयालुं
स्खालित्ये शासितारं स्वपरहितपरं देशिकं भूष्णुरीप्सेत् ॥ १

श्रुतिस्मृत्यादितात्पर्यनिरूढा न्यासविंशतिः ।
स्वयं व्याक्रियतेऽस्माभिर्दिङ्मात्रेण सदिच्छया ॥

प्रपत्त्याद्यपरपर्यायां न्यासविद्यां संजिघृक्षुः तत्त्वज्ञानादिमुखेन तदधिकारहेतुभूतमाचार्यसङ्ग्रहणमाह—**सिद्धमिति** । एतेषामाचार्यगुणानां प्रमाणानि 'तद्विज्ञानार्थं स गुरुमेवाभिगच्छेत् समित्पाणिश्श्रोत्रियं ब्रह्मनिष्ठम्' इत्यादीनि द्रष्टव्यानि । **समनियतया**—यथाकालं प्रवृत्तया ; यद्वा धर्मज्ञसमयव्यवस्थितया । **जितविषयगणं** स्ववशेन्द्रियवर्गम् । सम्यग्ज्ञानार्थतया गुर्वभिगमनेऽपि स्वेच्छया प्रवर्तमानस्य नियमांशमात्रे विधिरिति ज्ञापनार्थमीप्सेदिति सन्प्रत्ययप्रयोगः ॥

अज्ञानध्वान्तरोधादघपरिहरणादात्मसाम्यावहत्वात्
जन्मप्रध्वंसिजन्मप्रदगरिमतया दिव्यदृष्टिप्रभावात् ।
निष्प्रत्यूहानृशंस्यान्नियतरसतया नित्यशेषित्वयोगात्
आचार्यः सद्भिरप्रत्युपकरणधिया देववत्स्यादुपास्यः ॥ २

एवम् 'आचार्यवान् पुरुषो वेद' 'आचार्याद्धैव विद्या विदिता साधिष्ठं प्रापत्', 'आचार्यवत्तया मुक्तौ' इत्यादिप्रमाणानुसारादाचार्यवरणे सिद्धे 'देवमिवाचार्यमुपासीत' इत्यादिविहितं तत्सेवनमाह । **अज्ञानेति** । अत्रोक्ता हेतवः आचार्ये भगवति च अन्वीयन्ते । **जन्मप्रध्वंसिजन्म**—विद्याजन्म । 'ब्रह्मविद्याप्रदानस्य देवैरपि न शक्यते । प्रतिप्रदानमथवा दद्याच्छक्तित आदरात्' इत्याद्यभिप्रेत्य **अप्रत्युपकरणाधियेत्युक्तम्** ॥

सद्बुद्धिस्साधुसेवी समुचितचरितस्तत्त्वबोधाभिलाषी
शुश्रूषुस्त्यक्तमानः प्रणिपतनपरः प्रश्नकालप्रतीक्षः ।
शान्तो दान्तोऽनसूयुः शरणमुपगतः शास्त्रविश्वासशाली
शिष्यः प्राप्तः परीक्षां कृतविदभिमतं तत्त्वतश्शिक्षणीयः ॥ ३

सम्यगुपसन्ने सच्छिष्ये 'तस्मै स विद्वान्' इत्यादिविहितमाचार्यकृत्यमाह—**सद्बुद्धिरिति** । **अभिमतं**—मोक्षापयुक्तमर्थजातम् ॥

स्वाधीनाशेषसत्तास्थितियतनफलं विद्धि लक्ष्मीशमेकं
प्राप्यं नान्यं प्रतीया न च शरणतया कंचिदन्यं वृणीथाः ।
एतस्मादेव पुंसां भयमितरदपि प्रेक्ष्य मोज्झीस्तदाज्ञां
इत्येकान्तोपदेशः प्रथममिह गुरोरेकचित्तेन धार्यः ॥ ४

मुक्तिकामस्य मूलमन्त्राद्यभिधेयतया शिक्षणीये प्रधानांशे तस्य च नित्यानुसन्धेयत्वमाह **स्वाधीनेति** ॥

मोक्षोपायार्हतैवं भवति भवभृतां कस्यचित्क्वापि काले
तद्वद्भक्तिप्रपत्त्योरधिकृतिनियमः तादृशा स्यान्नियत्या ।
शक्ताशक्तादितत्तत्पुरुषविषयतः स्थाप्यते तद्व्यवस्था
यच्चाहुस्तद्विकल्पः सम इति कतिचित्तत्फलस्याविशेषात् ॥ ५

इद्देशोपदेशलब्धसम्यग्ज्ञानस्य पुरुषस्य 'अनित्यमसुखं लोकमिमं प्राप्य भजस्व माम्' 'मामेकं शरणं व्रज' इत्यादिभिरपवर्गोपायतया विहितयोर्भक्ति प्रपत्त्योः अधिकारव्यवस्थामाह—**मोक्षोपायेति** ॥

सानुक्रोशे समर्थे प्रपदनमृषिभिः स्मर्यतेऽभीष्टसिध्यै
लोकेऽप्येतत्प्रसिद्धं न च विमतिरिह प्रेक्ष्यते क्वापि तन्त्रे ।
तस्मात्कैमुत्यसिद्धं भगवति तु भरन्यासविद्यानुभावं
धर्मस्थेयाश्च पूर्वे स्वकृतिषु बहुधा स्थापयांचक्रुरेवम् ॥ ६

इत्थमधिकारिभेदात् गुरुलघुविकल्पसंभवेऽपि प्रपत्तिप्रभावे दुर्बलबुद्धीन् प्रत्याययति—**सानुक्रोश** इति । वायसवानरराक्षसद्रौपदीगजेन्द्रसुमुखनिषाद्शुनःशेपाद्याख्यानैरिति शेषः । **धर्मस्थेयाः**—विवादगोचरधर्मनिर्णेतारः । **पूर्वे**—भगवद्यामुनादयः ॥

शास्त्रप्रामाण्यवेदी ननु विधिविषये निर्विशङ्कोऽधिकारी
विश्वासस्याङ्गभावे पुनरिह विदुषा किं महत्वं प्रसाध्यम् ।
मैवं घोरापराधैः सपदि गुरुफले न्यासमात्रेण लभ्ये
शङ्का पार्ष्णिग्रहार्हा शमयितुमुचिता हेतुभिस्तत्तदर्हैः ॥ ७

अस्त्वेवमशक्तिपरिहारेण सर्वशास्त्रार्थसाधारणो विश्वासः, प्रपत्तिलक्षणवाक्ये महत्त्वेन विशेषणं किमर्थमित्यनुभाष्य परिहरति—**शास्त्रप्रामाण्येति**। अर्थस्वभावेन शङ्काप्रकर्षसम्भवात्तन्निवृत्त्यै ‘विदितस्स हि धर्मज्ञः’ ‘मित्रभावेन संप्राप्तं’ सकृदेव प्रपन्नाय’ इत्यादिप्रसिद्धशरण्यगुणविशेषादिपरामर्शभूम्ना विश्वासप्रकर्षः सम्पाद्यमान इति भावः ॥

नेहाभिक्रान्तिनाशो न च विमतिरिह प्रत्यवायो भवेदि-
त्युक्तं कैमुत्यरीत्या प्रपदनविषये योजितं शास्त्रविद्भिः ।
तस्मात्क्षेत्रे तदर्हे सुविदितसमये देशिकस्सम्यगुप्तं
मन्त्राख्यं मुक्तिबीजं परिणतिवशतः कल्पते सत्फलाय ॥ ८

किमीदृशविश्वासापेक्षया गुरुतरया प्रपत्त्या ? ‘सकृज्ज्ञातेन मन्त्रेण कृतकृत्यस्सुखी भवेत्’ ‘प्रपत्तिवाचैव निरीक्षितुं क्षमे’ इत्यादिप्रमाणसंप्रदायैः शरणागतिमन्त्रोच्चारणेनैव मुक्तिस्सिध्येदित्यत्राह—**नेहाभिक्रान्तिनाश** इति। **उक्तम्** कर्मयोगप्रकरण इति शेषः। ‘सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्’ इत्यादिन्यायेनात्र मन्त्रोच्चारणादिकं यथावस्थितं प्रपत्त्यनुष्ठानमुत्पाद्य तन्मुखेनैव मुक्तिं साधयति ; यथोक्तं सात्वततन्त्रे ‘अनेनैव तु मन्त्रेण स्वात्मानं मयि निक्षिपेत् । मयि निक्षिप्तकर्तव्यः कृतकृत्यो भविष्यति’ इति ॥

न्यासः प्रोक्तोऽतिरिक्तं तप इति कथितस्स्वध्वरश्चास्य कर्ता
ऽहिर्बुध्न्योऽप्यन्ववादीदृगणि दिविषदामुत्तमं गुह्यमेतत् ।
साक्षान्मोक्षाय चासौ श्रुत इह तु मुधा बाधशङ्का गुणाढ्ये
तन्निष्ठोऽप्यन्यनिष्ठान्प्रभुरतिशयितुं कोटिकोट्यंशतोऽपि ॥ ९

नन्वेवं प्रपत्तिरपि भक्तियोगद्वारेणैव मुक्तिहेतुस्स्यादित्याशङ्कायां मुमुक्षुर्वै शरणमहं प्रपद्ये’ इति श्रुतिस्वारस्यसिद्धम व्यवहितमोक्षसाधनत्वं व्यञ्जकान्तरेणापि द्रढयति **न्यासः प्रोक्त** इति। **प्रोक्तः** ‘तस्मान्न्यासमेषां तपसामतिरिक्तमाहु, रिति वाक्येन कथितः। ‘यस्समिधा’ इत्यारभ्य, ‘यो नमसा स स्वध्वरः इत्यृगंशेन अन्ववादीत्—ऋगर्थमन्वभाषत। यथा ‘समित्साधनकादीनां यज्ञानां न्यासमात्मनः। नमसा योऽकरोद्देवे सस्वध्वर इतीरित, इति। **अगणि** ‘एतद्वै

देवानां गुह्यम्' इत्यादिश्रुत्या। तन्निष्ठ इत्यादिना 'सत्कर्मनिरताश्शुद्धाः' इत्युक्तः प्रपन्नप्रभावो विवृतः। यद्यपि 'ओमित्यात्मानं युञ्जीत' इति प्रणवकरणको न्यासः श्रुतः, तथाऽपि तदनर्हाणां तद्विरहेऽपि तन्त्रोक्तप्रकारेण तत्प्रयोगो युज्यत इत्यभिप्रायेण तन्निष्ठ इति सामान्योक्तिः। श्रुतिसिद्धेऽपि प्रपदने सामान्यधर्मभूतसत्यवचनन्यायात्सर्वाधिकारत्वं च न विरुद्धम्। 'सर्वस्य शरणं सुहृत्' 'सर्वलोकशरण्याय' इत्यादिष्वेतदभिप्रेतम्॥

**नाना शब्दादिभेदादिति तु कथयता सूत्रकारेण सम्यक्**
**न्यासोपासे विभक्ते यजनहवनवच्छब्दभेदादभाक्तात्।**
**आख्यारूपादिभेदश्श्रुत इतरसमः किंच भिन्नोऽधिकारः**
**शीघ्रप्राप्त्यादिभिरस्याजगुरिति च मधूपासनादौ व्यवस्थाम्॥ १०**

सन्तु भाष्योक्तभक्त्यङ्गभूतप्रपत्तिप्रशंसापराण्येतानि वाक्यानि; गुणोपसंहारपादे प्रपत्तेः स्वतन्त्रविद्यात्वस्थापनाभावात् अनन्यथासिद्धसामान्यन्यायाभावाच्चेति शङ्कायां प्रपदनस्य मोक्षं प्रति पृथगुपायत्वोपपादनं तत्रैव सुस्पष्टमित्याह— **नानाशब्दादिभेदादिति।** **अभाक्तात्**—अनौपचारिकादित्यर्थः। सद्विद्यादहरविद्यादिषु शब्दभेदो हि तत्तद्गुणविशिष्टब्रह्मविषयप्रत्ययावृत्त्यभिधायित्वरूपेणापाद्यः, इहतु यागदानहोमादिवदपर्यायतयैव व्युत्पत्तेस्सिद्धिरिति भावः। न्यासविद्येत्याख्या अर्थस्वभावादत्राभिमतप्रदानसामर्थ्यविशिष्टपरनिरपेक्षरक्षकत्वरूपम्। आदिशब्देन परिकरप्रकरणयोर्ग्रहणम्। **इतरसमः** विद्यान्तरसमः। **किञ्चे**त्यादि प्राग्दर्शिताधिकारिभेदस्मारणम्। स्वातन्त्र्येण मोक्षोपायत्वेन सद्विद्यादेर्व्यावृत्त इहाधिकारः न स्यादित्याशङ्कायां मधुविद्याद्युदाहरणम्। भाष्येतु प्रपत्तेर्भक्त्यङ्गत्वोक्तिः न स्वातन्त्र्यविषयबाधिका, विषयभेदादुभयाकारयोगिषु क्वचिदन्यतरोक्तेरविरोधात्॥

**यत्किञ्चिद्रक्षणीयं तदवननिपुणे न्यस्यतोऽकिञ्चनस्य**
**प्रस्पष्टं लोकदृष्ट्याऽप्यवगमित इह प्रार्थनाद्यङ्गयोगः।**
**तस्मात्कर्माङ्गकत्वं व्यपनयति परापेक्षणाभाववादः**
**साङ्गेत्वष्टाङ्गयोगव्यवहृतिनयतः षड्विधत्वोपचारः॥ ११**

अङ्गत्वमेव प्रपत्तेरिति पक्षः परिहृतः । अथ स्वातन्त्र्येऽपि निरङ्गत्वपक्षं परिहरति—**यत्किञ्चिद्रक्षणीयमिति** । **अवगमितः**-' तदेकोपायतायाच्ञा प्रपत्तिः ' ' अप्रार्थितो न गोपायेत् ' ' शरणं च प्रपन्नानाम् ' इत्यादिभिरिति शेषः । **तस्मादित्यादिना** ' प्रपत्तेः क्वचिदप्येवं परापेक्षा न विद्यते ' इत्यस्य निर्विषयत्वशङ्काव्युदासः । तथा ' षड्विधा शरणागति, रिति वचनात् आग्नेयादिषट्कवत् आनुकूल्यसङ्कल्पादिषट्कं सम्भूय एकं कारणं स्यादित्यत्रोत्तरं—**साङ्गे तु** इत्यादि । ' न्यासः पञ्चाङ्गसंयुतः ' इति व्यवस्थापकवचनानुगुणमङ्गाङ्गिसमुच्चयेन षाड्विध्यवचनं नेयमिति भावः ॥

पञ्चाप्यङ्गान्यभिज्ञाः प्रणिजगुरविनाभावभाञ्जि प्रपत्तेः
कैश्चित्सम्भावितत्वं यदिह निगदितं तत्प्रपत्त्युत्तरं स्यात् ।
अङ्गाङ्गित्ववादः फलकथनमिह द्वित्रिमात्रोक्तयश्च
प्राशस्त्यं तत्र तत्र प्रणिदधति ततः सर्ववाक्यैककण्ठ्यम् ॥ १२

एवमङ्गाङ्गिविभागस्सिद्धः । तत्रावान्तरवैयाकुलीं शमयति **पञ्चाप्यङ्गानीति** । प्रपत्तिदशायां प्रातिकूल्यवर्जनाद्यभावे साङ्गस्योपायस्य वैकल्यात् पश्चात्तु प्रातिकूल्यादिसंभवेऽपि कृतस्योपायस्य न वैकल्यम्, किंतु प्रत्यवायान्तरपरिहारार्थं यथार्ह प्रतिविधानमेव कार्यम् ; ' तथा पुंसामविस्रंभात्प्रपत्तिः प्रच्युता भवेत् ' इत्येतदपि तात्कालिकाविस्रंभवैकल्याभिप्रायम् ; उत्तरकाले सतोऽसतोऽपि विश्वासस्य पूर्वकृतप्रपत्त्यङ्गत्वाभावेन तद्विरहे प्रपत्तिप्रच्यवनायोगात । एवञ्च ब्रह्मास्त्रन्यायदृष्टान्तोऽप्यत्र योग्यांशे स्थाप्यः ; अन्यथाऽतिप्रसङ्गात् । एतेन 'उपायापयासंयोगे निष्ठया हीयतेऽनया ' इत्येतदपि गतार्थम् ; तात्कालिकोपायापायसंयोगस्य प्रपत्तिविरोधित्वे तात्पर्यात । न चानुकूल्यसङ्कल्पस्याङ्गत्वेन श्रवणात् सङ्कल्पितकरणमप्यङ्गं, तथा श्रुत्यभावात्, यथाश्रुति सङ्कल्पमात्रस्याङ्गत्वे सङ्कल्पितकरणस्याङ्गत्वकल्पनाऽनुपपत्तेश्च । कृत्याकरणरूपापायानिवृत्तिस्तु स्वतन्त्रविधिरेव सिध्यतीति नोपप्लवावकाशः । ' आनुकूल्येतराभ्यां तु विनिवृत्तिरपायतः ' इत्यनेनापि सङ्कल्पादिविशेषस्य तात्कालिक उपयोगः प्रदर्श्यते ।

अत्रानुकूल्यशब्दोहि तत्सङ्कल्पप्रतिपादनपरः, ' आनुकूल्यस्यसङ्कल्पः , इत्यादि-सिद्धानुवादात् । न चोपायापायेत्यादौ प्रपत्तिनिष्ठाहानिर्विवक्षिता, किन्तूपाया-पायत्यागविशिष्टमध्यमवृत्तिहानिः, विशेषणाभावेऽपिहि विशिष्टाभावः सिध्यति; अत एव हि तत्र ' अपायसम्प्लवे सद्यः प्रायश्चित्तं समाचरेत् , इत्यादिना ताव-न्मात्रनिमित्तत्वं प्रायश्चित्तमेव विधीयते, न तु पूर्वकृतां प्रपत्तिं प्रच्युतामभिप्रेत्य तत्फलार्थं पुनः प्रपत्तिः ॥

रक्षापेक्षा स्वसाहाप्रणयवति भरन्यास आज्ञादिदक्षे
दृष्टा नात्र प्रपत्तिव्यवहृतिरिह तन्मेलनं लक्षणं स्यात् ।
गेहागत्यादिमात्रे निपततु शरणागत्यभिख्योपचारात्
यद्वाऽनेकार्थभावाद्भवति च विविधः पालनीयत्वहेतुः ॥ १३

प्रस्तुतमुख्योपचारप्रयोगव्यवस्थापनाय प्रपत्तिलक्षणं शोधयति **रक्षापेक्षेति** । प्रणयोऽत्र याच्ञा । आदिशब्देन भृतिप्रदानादिसङ्ग्रहः । **अनेकर्थभावात्** शरणशब्दस्यानेकार्थरूढत्वादित्यर्थः । प्रपदनरूपत्वाभावेऽपि केषांचित् गृहाग-मनादीनां रक्ष्यताहेतुत्वं प्रसिद्धमित्यभिप्रेत्य **भवति** चेत्यादिकमुक्तम् ॥

आत्मात्मीयस्वरूपन्यसनमनुगतं यावदर्थं मुमुक्षोः
तत्वज्ञानात्मकं तत्प्रमथममथ विधिः स्यादुपाये समेतम् ।
कैङ्कर्याख्ये पुमर्थेऽप्यनुषजति तदप्यर्थनाहेतुभावात्
स्वाभीष्टानन्यसाध्यावधिरिह तु भरन्यासभागोऽङ्गिभूतः ॥१४

एवं लौकिकवैदिकसर्वप्रपत्तीनां साधारणरूपमुक्तम् ; अथ मोक्षैकप्रयोजनायां मुक्तप्रपत्तौ सर्वनिवृत्तिधर्मसाधारणं स्वाभाविकपरशेषत्वाभिमानरूपं विशेषमाह- **आत्मात्मीयेति । आत्मीयम्** उपायफलादि । आत्मा चात्मीयाश्च यावन्तोऽर्थाः प्रमाणसिद्धाः तावतां सर्वेषां भगवच्छेषत्वानुसन्धानं कार्यम् । तच्चानुसन्धानं उपायदशायामपि निवृत्तिधर्मविधिस्वाभाव्यादनुवर्तते । इह चामुत्र च स्वयं प्रयोजनकैङ्कर्ये स्वत एव भवति; अङ्गिभूतो भरन्यासांशस्तु न यावदर्थं , किंतु यावदनन्यसाध्यं स्वाभीष्टं तावत्येव भवतीत्यर्थः ॥

न्यासादेशेषु धर्मत्यजनवचनतोऽकिंचनाधिक्रियोक्ता
कार्पण्यं वाऽङ्गमुक्तं भजनवदितरापेक्षणं वाऽप्यपोढम् ।
दुःसाधेच्छोश्रमौ वा क्वचिदुपशमिताचन्यसंमेलने वा
ब्रह्मास्त्रन्याय उक्तस्तदिह न विहितो धर्म आज्ञादिसिद्धः ॥ १५

सर्वशक्तौ भरं न्यस्यतः सर्वधर्मत्यागवचनात् वर्णाश्रमादिधर्मरूपमाज्ञाकैङ्कर्यं तदनुविद्धमनुज्ञाकैङ्कर्यं च न स्यातामित्यत्राह- **न्यासादेशेष्विति** । **क्वचित्** चपलत्वादशक्यप्रवृत्ते कस्मिंश्चिदधिकारिणि । **अन्यसंमेलने** प्रपत्त्यङ्गव्यतिरिक्तानां तदर्थतया स्वीकृतौ । **तत्** तस्मात् । धर्माणां स्वरूपत्यागस्य प्रपत्त्यङ्गत्वाभावात् तेषां प्रपत्त्यर्थत्वेनाप्रतिपादनाच्चेत्यर्थः । सर्वधर्मपरित्यागवचनस्यात्र सर्वाविरुद्धेष्वर्थान्तरेषु सम्भवत्सु तद्विपरीतार्थकथनमयुक्तमिति भावः । एतेनालेपकादिपक्षाश्च प्रतिक्षिप्ताः ॥

आदेष्टुं स्वप्रपत्तिं तदनुगुणगुणाद्यन्वितं स्वं मुकुन्दः
मामित्युक्त्वैकशब्दं वदति तदुचितं तत्र नान्यत्र मृग्यम् ।
तत्प्राप्यप्रापकैक्यं सकलफलदतां न्यासतोऽन्यानपेक्षां
प्राधान्याद्यं च किंचित्प्रथयति न परं श्रीसखे मुक्त्युपाये ॥ १६

ननु यदि प्रपत्तिरुपायस्स्यात् तदा हि अङ्गित्वं केषांचिदङ्गत्वंच वक्तव्यम्; सा तु तत्तद्वाक्येषूपायतयोक्तस्य शरणस्य विशेषणतया प्रयुक्तैरेकादिशब्दैः उपायबुद्ध्यनर्हत्वेन व्यवच्छिद्यते तस्मात्पूर्वोक्तं सर्वमयुक्तमित्यत्राह-**आदेष्टुमिति**। तद्विध्यनुरोधेन नेतव्यत्वादिति भावः ।अन्यथाऽप्युपपन्नं सिद्धोपायस्यैक्यं प्रपत्तेस्तत्प्रसादोपायत्वं न विरुन्ध्यादितिभावः । एवं निर्विशेषाद्वैतबुद्धिविधानादिपक्षाश्चात्र निरस्ता वेदितव्याः ॥

स्वाभीष्टप्राप्तिहेतुः स्वयमिह पुरुषैः स्वीकृतः स्यादुपायः
शास्त्रे लोके च सिद्धः स पुनरुभयथा सिद्धसाध्यप्रभेदात् ।
सिद्धोपायस्तु मुक्तौ निरवधिकदयः श्रीसखः सर्वशक्तिः
साध्योपायस्तु भक्तिर्न्यसनमिति पृथक्तद्वशीकारसिद्ध्यै ॥ १७

उक्तार्थस्थिरीकरणाय सामान्यत उपायशब्दार्थं सिद्धसाध्योपायविशेषौ तत्प्रयोजनं च विभजते–**स्वाभीष्टेति** ॥

अत्यन्ताकिञ्चनोऽहं त्वदपचरणतः संनिवृत्तोद्य नाथ
त्वत्सेवैकान्तधीः स्यां त्वमसि शरणमित्यध्यवस्यामि गाढम् ।
त्वं मे गोपायिता स्यास्त्वयि निहितभरोऽस्म्येवमित्यर्पितात्मा
यस्मै स न्यस्तभारः सकृ(दिति)दथ तु सदा न प्रयस्येत्तदर्थम् ॥

समर्थितमेव साङ्गभरन्यासं यथावदनुष्ठानाय मुखभेदेन शिक्षयन् तद्विषयं कर्तव्यशेषं नास्तीत्याह-**अत्यन्तेति** । यस्मै प्रयोजनायेति शेषः । सकृदित्यनेन उपासनवदस्यावृत्तिसापेक्षत्वं नास्तीत्युच्यते । सकृत्कृतश्शास्त्रार्थ इत्यस्यापवादो नास्ति, प्रत्युत 'सकृदेवेत्यादिः अनुग्रह एव । सदा यावत्फलप्राप्तीत्यर्थः । ननु न्यासनिष्ठमेव 'तस्यैवं विदुष' इति परामृश्य तत्कर्तव्यत्वेन पुरुषविद्याऽऽम्नाता; सा च 'यन्मरणं तदवभृथ' इत्यन्ता यज्ञदृष्टिरूपा च; अतो यावज्जीवं तदर्थं कर्तव्यस्य विधीयमानत्वात् न प्रयस्येत्तदर्थमित्यनुपपन्नम् । मैवम्ः तत्रापि हि न्यस्तभरस्य कर्तव्यान्तरनैरपेक्ष्यमेव विवक्षितम् । यदि तु प्रस्तुत विद्याङ्गतयाऽत्र यज्ञक्लृप्तिर्विधीयते तर्हि दर्शपूर्णमासादीनां क्लृप्तिर्न वाच्या; तेषां यज्ञोपयोगित्वाभावात् । अश्रुतापूर्वतदन्वितयज्ञान्तरकल्पनं शास्त्रार्थदृष्टिविधित्वकल्पनञ्चात्यन्तगौरवोपहतम् । एकस्यावभृथात्पूर्वमन्येषां क्लृप्तिश्चानुपपन्ना । तस्मात् 'एवं शरणमभ्येत्य भगवन्तं सुदर्शनम् । अनुष्ठितक्रतुशतो भवत्येष नसंशय ' इतिवत् यज्ञादिकं सर्वमस्य स्वतस्सम्पन्नं भवतीति स्तुतिमात्रे तात्पर्यं ग्राह्यम् । शारीरकभाष्यमपि एतदविरोधेन भाव्यम् ॥

त्यक्त्वोपायानपायानपि परमजहन्मध्यमां स्वार्हवृत्तिं
प्रायश्चित्तं च योग्यं विगतऋणततिर्द्वन्द्ववात्यां तितिक्षुः ।
भक्तिज्ञानादिवृद्धिं परिचरणगुणान् सत्समृद्धिं च युक्तां
नित्यं याचेदनन्यः तदपि भगवतस्तस्य यद्वाऽऽप्तवर्गात् ॥ १९

कृतकृत्यस्योत्तरदशायां स्वाधिकाराद्यनुगुणं त्याज्यं स्वतन्त्रविधिप्राप्तं कर्तव्यम्

अनुसन्धेयं प्रार्थनीयञ्च संगृह्णाति **त्यक्त्वेति**। **उपायान्**-काम्यधर्मान्। **अपायन्**-प्रत्यवायहेतून्। **परं**-केवलंप्रपत्युत्तरं वा। **मध्यमाम्**-उपायापायवर्गानन्विताम् **स्वार्हवृत्तिं**-नित्यरूपां तत्समाननैमित्तिकरूपांच वृत्तिम्। 'अपायसंप्लवे सद्यः प्रायश्चित्तं समाचरेत्। प्रायश्चित्तिरियं साऽत्र यत्पुनश्शरणं व्रजेत्'—इत्युक्तमाह—**प्रायश्चित्तञ्च योग्यमिति**। अजहादित्यनुषज्यते। 'देवर्षिभूतात्मनृणां पितॄणां न किङ्करो नायमृणी च राजन्' इत्याद्युक्तं सूचयति—**विगतऋणततिरिति**। ब्रह्मचर्यादिभिरपाकर्तव्यं भगवत्प्रपन्नस्य प्रपत्त्यैवापाकृतं देवयज्ञादिकं त्वस्य मध्यमवृत्त्यनुप्रविष्टं कैङ्कर्यमिति भावः। द्वन्द्वतितिक्षावचनंप्रारब्धकर्मक्षयदर्शनजनितप्रीतिसूचकम्, अव्याकुलकैङ्कर्योपादानार्थञ्च। **परिचरणगुणान्**—कैङ्कर्योपकरणभूतान् गन्धपुष्पादीन्; यद्वा फलसङ्गत्यागादीन्। सत्समृद्धिरपि कैङ्कर्यानुपयुक्ता न याच्येत्यभिप्रायेण **युक्तामियुक्तम्**। **भगवत** इत्यादिना देवान्तरेभ्यस्तदीयेभ्यश्च भक्त्यादिकमपि न याच्यमिति सूच्यते॥

आज्ञाकैङ्कर्यवृत्तिष्वनघगुरुजनप्राक्रियानेमिवृत्तिः
स्वार्हानुज्ञातसेवाविधिषु च शकने यावदिष्टं प्रवृत्तः।
कर्म प्रारब्धकार्यं प्रपदनमहिमध्वस्तशेषं द्विरूपं
भुक्त्वा स्वाभीष्टकाले विशति भगवतः पादमूलं प्रपन्नः॥ २०

उक्तप्रकारस्याधिकारिणः स्वाभिमतकाले परमफलप्राप्तिमाह—**आज्ञेति**। प्रपत्त्यङ्गत्वाभावेऽपि 'विहितत्वाच्चाश्रमकर्मापी'तिन्यायेन स्वतन्त्राधिकारसिद्धेः शक्तस्यास्य कर्तव्यमाज्ञाकैङ्कर्यमकरणे प्रत्यवायरहितमनुज्ञाकैङ्कर्यम्। **द्विरूपमिति** पुण्यपापरूपमित्यर्थः॥

श्रुत्या स्मृत्यादिभिश्च स्वयमिह भगवद्वाक्यवर्गैश्च सिद्धां
स्वातन्त्र्ये पारतन्त्र्येऽप्यनितरगतिभिः सद्भिरास्थीयमानाम्।
वेदान्ताचार्य इत्थं विविधगुरुजनग्रन्थसंवादवत्या
विंशत्या न्यासविद्यां व्यवृणुत सुधियांश्रेयसे वेङ्कटेशः॥ २१

परमपुरुषार्थसाधिनीं भगवत्प्रपत्तिं प्रमाणतः प्रभावतः प्रवक्तृतश्च विशिंषन्

तद्विषयग्रन्थनिर्माणप्रयोजनञ्च प्रतिपादयति—**श्रुत्येति**। *यो ब्रह्माणं विदधाति पूर्वमित्यादिकया श्रुत्या, *देवानां दानवानां च *शरण्यं शरणञ्च त्वां, शरणं त्वां प्रपन्ना ये ध्यानयोगविवर्जिता इति स्मृत्यादिभिश्च, 'स्थिते मनसि सुस्वस्थे, 'सकृदेव प्रपन्नाय, सर्वधर्मान् परित्यज्य इत्यादिभिः भगवद्वाक्यवर्गैश्च। **सिद्धां**—प्रमितामित्यर्थः। आप्ततमत्वसूचनाय अत्र भगवच्छब्दः। **स्वातन्त्र्ये पारतन्त्र्येऽपि**—अव्यवधानेन व्यवधानेन वा मुक्तिसाधनत्वे, यद्वा स्वतन्त्राङ्गत्वविवादेऽपी त्यर्थः। **गुरुजनग्रन्थाः**—स्तोत्रगद्यादयः॥

संसारावर्तवेगप्रशमनशुभ(कृद्दे)दृग्देशिकप्रेक्षितोऽहं
संत्यक्तोऽन्यैरुपायैरनुचितचरितेष्वद्यशान्ताभिसन्धिः।
निःशङ्कस्तत्त्वदृष्ट्या निरवधिकदयं प्रा(र्थ्य)प्य संरक्षकं त्वां
न्यस्य त्वत्पादपद्मे वरद निजभरं निर्भरो निर्भयोऽस्मि॥२२॥

इति कवितार्किक—कृतिषु न्यासविंशतिः संपूर्णा॥

**उक्तमुपायं** सुखग्रहणाय स्वानुष्ठानसुखेन निगमयति **संसारेति**। अत्र सर्वशक्तौ परमकारुणिके सर्वाभिमतवरप्रदे संन्यस्तभरत्वान्निर्भयत्वसिद्धिः। अयमत्र मुमुक्षोरनुशासनीयसंग्रहः—सदाचार्योपसत्तिपूर्वकं समन्त्रकं सम्यग्ज्ञानं संपाद्य गुरुतरोपायान्तरानिष्पादनाय नुगुणज्ञानशक्त्यादिविरहान्निर्विण्णः स्ववाक्यस्तुति कर्तव्यलघूपायपरामर्शे प्रत्यवस्थापितः फलसङ्गकर्तृत्वत्यागयुक्तसाङ्ग भरन्यासेन कृतकृत्यः स्वीकृतभरं श्रियःपतिमवलोक्य निर्भरो निर्भयश्च स्वयंप्रयोजनकैङ्कर्येण सुखं वर्तेत इति॥

इति कवितार्किक—कृतिषु न्यासविंशतेर्व्याख्या संपूर्णा॥

श्रीमन्निगमान्त महा देशिक विरचितम्

## न्यासतिलकम्

श्रीमान्वेंकटनाथार्यः—सन्निधत्तां सदा हृदि ॥

गुरुभ्यस्तद्गुरुभ्यश्च नमोवाकमधीमहे ।
वृणीमहे च तत्राद्यौ दंपती जगतां पती ॥

प्रायः प्रपदने पुंसां पौनःपुन्यं निवारयन् ।
हस्तः श्रीरङ्गभर्तुः मामव्यादभयमुद्रितः ॥ १

आनादेर्निस्सीम्नो दुरितजलधेर्यन्निरुपमम्
विदुः प्रायश्चित्तं यदुरघुधुरीणाशयविदः ।
तदारम्भे तस्या गिरमवदधानेन मनसा
प्रपद्ये तामेकां श्रियमखिलनाथस्य महिषीम् ॥ २

महेन्द्राग्ना विष्णुप्रभृतिषु महत्त्वप्रभृतिवत्
प्रपत्तव्ये तत्त्वे परिणमित वैशिष्ट्यविभवाम् ।
अधृष्यत्वं धूत्वा कमितु रभिगम्यत्वजननीं
श्रियं शीतापाङ्गामहमशरणो यामि शरणम् ॥ ३

स्वतस्सिद्धः श्रीमा नमितगुणभूमा करुणया
विधाय ब्रह्मादीन् वितरति निजावे(दे)शमपि यः ।
प्रपत्त्या साक्षाद्वा भजन शिरसावाऽपि सुलभम्
मुमुक्षुः देवेशं तमहमधिगच्छामि शरणम् ॥ ४

बृन्दानि यः स्ववशयन् व्रजसुन्दरीणां बृन्दावनान्तरभुवां सुलभो बभूव ।
श्रीमानशेष जनसंग्रहणाय शेते रङ्गे भुजङ्गशयने समहाभुजङ्गः ॥ ५

रङ्गास्तीर्णभुजङ्गपुङ्गववपुः पर्यङ्कवर्यं गतौ
सर्गास्थित्यवसानकेळिरसिकौ तौ दंपती नः पती ।
नाभीपङ्कजशायिनः श्रुतिसुखैरन्योन्यबद्धास्मितौ
डिंभस्यांबुजसंभवस्य वचनैरोंतत्सदित्यादिभिः ॥ ६

घनकरुणारसौघभरितां परितापहरां नयनमहच्छटां मयितरङ्गय रङ्गपते ।
दुरितहुताशनस्फुरितदुर्दमदुःखमषीमलिनितविश्वसौधदुरपह्नववर्णमुधाम् ॥ ७

दुर्मोचोद्भटकर्मकोटिनिबिडोऽप्यादेशवश्यः कृतो
वाह्यैनैव विमोहितोऽस्मि कुदृशां पक्षैर्न विक्षोभितः ।
यो माहानसिको महान्यतिपतेः नीतश्च तत्पौत्रजान्
आचार्यानिति रङ्गधुर्य मयि ते स्वल्पावशिष्टो भरः ॥ ८

त्वय्याचार्यैर्विनिहितभरास्तावका रङ्गनाथ
त्वत्कैंकर्यप्रवणमनसस्त्वद्गुणास्वादमत्ताः ।
त्वय्येकस्मिन्नपि विजहतो मुक्तवत्साधनत्वम्
त्वच्छेषत्वस्वरसरसिकास्सूरयो मे स्वदन्ताम् ॥ ९

आर्तेष्वाशुफला तदन्यविषयेऽप्युच्छिन्नदेहान्तरा
वह्न्यादेरनपेक्षणात्तनुभृतां सत्यादिवद्व्यापिनी ।
श्रीरङ्गेश्वर यावदात्मनियतत्वत्पारतन्त्र्योचिता
त्वय्येव त्वदुपायधीरपिहितस्वोपायभावाऽस्तु मे ॥ १०

कल्पस्तोमेऽप्यपास्तत्वदितरगतयश्शक्तिधीभक्तिभूम्ना
रङ्गेश प्रातिकूल्यक्षरणपरिगमान्नीर्विधातानुकूल्याः ।
त्रातारं त्वामभेद्याच्छरणवरणतो नाथ निर्विघ्नयन्तः
त्वन्निक्षिप्तात्मरक्षां प्रति रभसजुषस्स्वप्रवृत्तिं त्यजन्ति ॥ ११

त्यक्तोपायव्यपायांस्तदुभयकरणे सत्रपान्सानुतापान्
भूयोऽपि त्वत्प्रपत्त्या प्रशमितकलुषान् हन्त सर्वंसहस्त्वम् ।
रङ्गिन्न्यासान्तरङ्गाखिलजनहिततागोचरत्वन्निदेश
प्रीतिप्राप्तस्ववर्णाश्रमशुभचरितान्पासि धन्याननन्यान् ॥ १२

शोकास्पदांशमथनश्रयतां भवाब्धौ रागास्पदांशसहजं न रुणत्सि दुःखम् ।
नो चेदमी जगति रङ्गधुरीण भूयः क्ष्मोदिव्यभोगरसिकास्तव न स्मरेयुः ॥ १३

हेतुर्वैधे विमर्शे भजनवदितरत्किंत्वनुष्ठानकाले
वेद्यस्त्वद्रूपभेदो विविधं इह सतूपासनाऽन्यानपेक्षा ।

रङ्गिन् प्रारब्धभङ्गात्फलमधिकमनावृत्तिरुक्तेष्टिवत्स्यात्
नानाशब्दादिभेदात्प्रपदनभजने सूचिते सूत्रकारैः ॥ १४
भक्तौ रङ्गपते यथा खलु पशुच्छागादिवद्वेदन-
ध्यानोपासनदर्शनादिवचसामिच्छन्त्यभिन्नार्थताम् ।
व्यक्त्यैक्याच्छरणागतिप्रवचनत्यागात्मनिक्षेपणे
न्यासाद्येषु तथैव तन्त्रनिपुणैः पर्यायता स्मर्यते ॥ १५
विश्वासायासभूम्नोर्न्यसनभजनयोर्गौरवे को विशेषः
तत्सद्भावेऽपि धर्मान्तर इव घटते कर्तृभेदाद्विकल्पः ।
तद्भेदो रङ्गशायिन्ननितरगतितात्युत्थशोकातिरेकात्
सद्विद्यादौ विकल्पस्त्वभिमतिभिदया तेन तत्रैकराश्यम् ॥ १६
ध्रुवमधिकृतिभेदात्कर्मवद्रङ्गवासि(शायि)न् फलति फलमनेकं त्वत्पदे भक्तिरेका ।
शरणवरणवाणी सर्वहेतु स्तथासौ कृपण भजननिष्ठा बुद्धिदौर्बल्यकाष्ठा ॥ १७
कर्तव्यं सकृदेव हन्त कलुषं सर्वं ततो नश्यति
ब्रह्मेशादिसुदुर्लभं पदमपि प्राप्यं मया द्रागिति ।
विश्वासप्रतिबन्धि चिन्तनमिदं पर्यस्यति न्यस्यताम्
रङ्गाधीश रमापतित्वसुभगं नारायाणत्वं तव ॥ १८
धीकर्मभक्तिरसिकस्य तदात्मशक्त्या रङ्गेश भावकलुषप्रणतिद्वयोक्तेः ।
मन्ये बलं प्रबलदुष्कृतशालिनो मे त्वन्मूलदेशिककटाक्षनिपातमात्रम् ॥ १९
अन्धोऽनन्धग्रहणवशगो याति रङ्गेश यद्वत्
पङ्गुर्नौकाकुहरनिहितो नीयते नाविकेन ।
भुङ्क्ते भोगानविदितनृपस्सेवकस्यार्भकादिः
त्वत्संप्राप्तौ प्रभवति तथा देशिको मे दयालुः ॥ २०
उक्त्या धनंजयविभीषणलक्ष्यया ते प्रत्याय्य लक्ष्मणमुनेर्भवता वितीर्णम् ।
श्रुत्वा वरं तदनुबन्ध मदावलिप्ते नित्यं प्रसीद भगवन् मयि रङ्गनाथ ॥ २१
सकृदपि विनतानां सर्वदे सर्वदेहिन्युपनिषदभिधेये भागधेये विधेये ।
विरमति नकदाचिन्मोहतो हा हतोऽहं विषमविषयचिन्ता मेदुरा मे दुराशा ॥

यावज्जीवं जगति नियता देहयात्रा भवित्री
त्यक्तास्सर्वे त्रिचतुरदिन ग्लानभोगा नभोगाः ।
दत्ते रङ्गी निजमपि पदं देशिकादेशकांक्षी
किं ते चिन्ते परमभिमतं खिद्यसे यत्पुनस्त्वम् ॥ २३

अपि मुहुरपराधैरप्रकम्प्यानुकम्पे वहति महति योगक्षेमबृन्दं मुकुन्दे ।
मदकलुषमनीषावक्रेलपावलेपाननुगुणयितुमीहे न प्रभूनप्रभूतान् ॥ २४

मातर्भारति मुञ्च मानुषचटून्हे देह लब्धैरलं
लुब्धद्वारदुरासिकापरिभवैस्तोषं जुषेथा मनः ।
वाचःसीमनि रङ्गधामनि महानन्दोन्नमद्भूमनि
स्वामिन्नात्मनिवेङ्कटेश्वरकवेः स्वेनार्पितोऽयं भरः ॥ २५

दास्यंलास्यवतानुमत्यमनसा रङ्गेश्वरत्वत्पदे
नित्यं किंकरवाण्यहं नतुपुनः कुर्यां कदर्याश्रयम् ।
मीलच्चक्षुषि वेल्लितभ्रुणि मुहुर्दत्तावमनाक्षरे
भीमे कस्यचिदाढ्यकस्य वदने भिक्षाविलक्षां दृशम् ॥ २६

त्वय्येकाञ्जलिकिंकरे तनुभृतां निर्व्याजसर्वंसहे
कल्याणात्मनि रङ्गनाथ कमलाकान्ते मुकुन्दे स्थिते ।
स्वामिन् पाहि दयस्व देहि कुशलंजीव प्रभो भावये-
त्यालापानवलेपिषु प्रलपितुं जिह्रेति जिह्वा मम ॥ २७

त्वयि सति रङ्गधुर्य शरणागतकामदुघे निरवधिकप्रवाहकरुणापरिणाहवति ।
परिमितदेशकालफलदान्फलदाकृतिकान्कथमधिकुर्महे विधिशिवप्रमुखानमुकान् ॥

ओमित्यभ्युपगम्य रङ्गनृपतेऽनन्योचितां शेषतां
स्वातन्त्र्यादिमयीं व्यपोह्य महतीमाद्यामविद्यास्थितिम् ।
नित्यासंख्यविसीमभूमगुणयोर्यायामनायासतः
सेवासंपदमिन्दिरेश युवयोरैकान्तिकात्यन्तिकीम् ॥ २९

आचार्याद्रङ्गधुर्य द्वयसमधिगमे लब्धसत्वं तदात्वे
विश्लिष्टश्लिष्टपूर्वोत्तरदुरितभरं यापितारब्धदेहम् ।

नीतं त्वत्कैस्त्वया वा निरवधिकदयोद्भूतभोगादिरूपं
त्वद्भोगैकस्वभोगं दयितमनुचिरं त्वत्कृते मां कुरुष्व ॥ ३०

विधानं रङ्गेशादधिगतवतो वेङ्कटकवेस्स्फुरद्वर्णं वक्त्रे परिकलयतां न्यासतिलकम्।
इहामुत्राप्येष प्रणतजनचिन्तामणिगिरिस्स्वपर्यङ्के सेवां दिशति फणिपर्यङ्करसिकः ॥

इति कवितार्किकसिंहस्य...कृतिषु न्यासतिलकम सम्पूर्णम् ॥

कवितार्किकसिंहाय...वेदान्तगुरवे नमः ॥

## षोडशायुधस्तुतिः

श्रीमान्वेङ्कटनाथार्यः––सन्निधत्तां सदा हृदि ॥

स्वसंकल्पकलाकल्पैरायुधैरायुधेश्वरः जुष्टष्षोडशभिर्दिव्यैर्जुषतां नः परः पुमान् ॥
यदायत्तं जगच्चक्रं कालचक्रं च शाश्वतम् पातु नस्तत्परं चक्रं चक्ररूपस्य चक्रिणः

यत्प्रसूतिशतैरासन् रुद्राः परशुलांछनाः ।
स दिव्यो हेतिराजस्य परशुः परिपातु नः ॥ ३

हेलया हेतिराजेन यस्मिन्दैत्याः समुद्धृते ।
शकुन्ता इव धावन्ति स कुन्तः पालयेत नः ॥ ४

दैत्यदानवमुख्यानां दण्ड्यानां येन दण्डनम् ।
हेतिदण्डेशदण्डोऽसावस्माकं दण्डयेद्द्विषः ॥ ५

अनन्यान्वयभक्तानां रुन्धन्नाशामतंगजान् ।
अनङ्कुशविहारो नः पातु हेतीश्वराङ्कुशः ॥ ६

सभूय शलभायन्ते यत्र पापानि देहिनाम् ।
स पातु शतवक्त्राग्निहेतिः हेतीश्वरस्य नः ॥ ७

अविद्यां स्वप्रकाशेन विद्यारूपश्छिनत्ति नः ।
स सुदर्शन निस्त्रिंशः सौतु नस्तत्त्वदर्शनम् ॥ ८

क्रियाशक्तिगुणो विष्णोर्यो भवत्यतिशक्तिमान् ।
अकुण्ठशक्तिस्साशक्तिरशक्तिं वारयेत्तु नः ॥ ९

तारत्वं यस्य संस्थाने शब्दे च परिदृश्यते ।
प्रभोः प्रहरणेन्द्रस्य पाञ्चजन्यः स पातु नः ॥ १०

यं सात्विक महंकार मामनंत्यक्षसायकम् ।
अव्यान्नः चक्ररूपस्य तद्धनुः शार्ङ्गधन्वनः ॥ ११

आयुधेन्द्रेण येनैव विश्वसर्गो विमुच्यते ।
सनस्सौदर्शनः कुर्यात् पाशः पाशविमोचनम् ॥ १२

विहारो धनदेवस्य विश्वक्षेत्र कृषीवलः ।
व्यज्यतेऽनेन सीरेण नासीरविजयोऽस्तु वः ॥ १३

आयुधानामहंवज्रं इत्यगीयत यः स नः ।
अव्याद्धेतीशवज्रोऽयं दधीच्यस्थिसमुद्भवः ॥ १४

विश्वसंहृतिशक्तिर्या विश्रुता बुद्धिरूपिणी ।
सानस्सौदर्शनी भूयात् भवप्रशमनी गदा ॥ १५

यात्यतिक्षोदशालित्वं मुसलो येन तेन नः ।
हेतीशमुसलेनाशु भिद्यतां मोहमौसलम् ॥ १६

शूलिदृष्टमनोर्वाच्यो येन शूलयति द्विषः ।
भवतां तेन भवतात्त्रिशूलेन विशूलिता ॥ १७

अस्त्रग्रामस्य कृत्स्नस्य प्रसूतिं यं प्रचक्षते ।
सोऽव्यात्सुदर्शनो विश्वमायुधैष्षोडशायुधः ॥ १८

श्रीमद्वेङ्कटनाथेन श्रेयसे भूयसे सताम् ।
कृतेयमायुधेंद्रस्य षोढशायुधसंस्तुतिः ॥ १९

इति कवितार्किकसिंहस्य--कृतिषु षोडशायुधस्तुतिः संपूर्णा ॥

कवितार्किकसिंहाय...वेदान्तगुरवे नमः ॥

श्रीमन्निगमान्तमहादेशिकविरचितं

## श्रीसुदर्शनाष्टकम्

श्रीमान् वेङ्कटनाथार्यः...सन्निधत्तां सदा हृदि ॥

प्रतिभटश्रेणिभीषण वरगुणस्तोमभूषण जनिभयस्थानतारण जगदवस्थानकारण ।
निखिलदुष्कर्मकर्शन निगमसद्धर्मदर्शन जयजयश्रीसुदर्शन जयजय श्रीसुदर्शन
शुभजगद्रूपमण्डन सुरजनत्रासखण्डन शतमखब्रह्मवन्दित शतपथब्रह्मनन्दित ।

प्रथितविद्वत्सपक्षित भजदहिर्बुध्न्यलक्षित
जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥ २
निजपदप्रीतसद्गुण निरुपधिस्फीतषड्गुण
निगमनिर्व्यूढवैभव निजपरव्यूहवैभव ।

हरिहयद्वेषिदारण हरपुरप्लोषकारण जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥
स्फुटतटिज्जालपिञ्जर पृथुतरज्वालपञ्जर परिगतप्रत्नविग्रह पटुतरप्रज्ञदुर्ग्रह ।
प्रहरणग्राममण्डित परिजनत्राणपण्डित जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥
भुवननेत्रत्रयीमय सवनतेजस्त्रयीमय निरवधिस्वादुचिन्मय निखिलशक्ते हिरण्मय
अमितविश्वक्रियामय शमितविष्वग्भयामय जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन
महितसंपत्सदक्षर विहितसंपत्षडक्षर षडरचक्रप्रतिष्ठित सकलतत्त्वप्रतिष्ठित ।
विविधसङ्कल्पकल्पक विबुधसङ्कल्पकल्पक जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन
प्रतिमुखालीढबन्धुर पृथुमहाहेतिदन्तुर विकटमालापरिष्कृत विविधमायाबहिष्कृत
स्थिरमहायन्त्रयन्त्रित दृढदयातंत्रयंत्रित जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन
दनुजविस्तारकर्तन दनुजविद्याविकर्तन जनितमिस्राविकर्तन जगदविद्यानिकर्तन
अमरदृष्टस्वविक्रम समरजुष्टभ्रमिक्रम जयजय श्रीसुदर्शन जयजय श्रीसुदर्शन ॥

द्विचतुष्कमिदं प्रभूतसारं पठतां वेङ्कटनायक प्रणीतम् ।
विषमेऽपि मनोरथः प्रधावन्नविहन्येत रथाङ्गधुर्यगुप्तः ॥ ९

कवितार्किकसिंहाय—वेदान्तगुरवे नमः ॥

श्रीमन्निगमान्त महा देशिक विरचितम्

## दशावतार स्तोत्रम्.

श्रीमान् वेङ्कटनाथार्यः—सन्निधत्ताम् सदा हृदि ॥

देवो नश्शुभमातनोतु दशधा निर्वर्तयन् भूमिकां
रङ्गे धामनि लब्धनिर्भररसैरध्यक्षितो भावुकैः ।
यद्भावेषु पृथग्विधेष्वनुगुणान् भावान् स्वयं बिभ्रती
यद्धर्मैरिह धर्मिणी विहरते नानाकृतिर्नायिका ॥ १

निर्मग्नः श्रुतिजालमार्गणदशा दत्तक्षणैरीक्षणैः
अन्तस्तन्वदिवारविन्दगहनान्यौदन्वतीनामपाम् ।
निष्प्रत्यूह तरङ्गरिङ्खणमिथः प्रत्यूढपाथश्छटा-
डोलारोहसदोहळं भगवतो मात्स्यं वपुः पातु नः ॥ २

अव्यासुः भुवनत्रयीमनिभृतं कण्डूयनैरद्रिणा
निद्राणस्य परस्य कूर्मवपुषो निश्वासवातोर्मयः ।
यद्विक्षेपणसंस्कृतोदधिपयः प्रेङ्खोळपर्याङ्किका-
नित्यारोहणनिर्वृतो विहरते देवस्सहैव श्रिया ॥ ३

गोपायेदनिशं जगन्ति कुहनापोत्री पवित्रीकृत
ब्रह्माण्डः प्रळयोर्मिघोषगुरुभिघोणारवैर्घुर्घुरैः ।
यद्दंष्ट्राङ्कुरकोटिगाढघटनानिष्कम्पनित्यस्थितिः
ब्रह्मस्तम्बमसौदसौ भगवती मुस्तेव विश्वंभरा ॥ ४

प्रत्यादिष्टपुरातनप्रहरणग्रामः क्षणं पाणिजैः
अव्यात्त्रीणि जगन्त्यकुण्ठमहिमा वैकुण्ठकण्ठीरवः ।
यत्प्रादुर्भवनादवन्ध्यजठरा याहच्छिकाद्वेधसां
या काचित्सहसा महासुरगृहस्थूणा पितामह्यभूत् ॥ ५

व्रीडाविद्धवदान्यदानवयशोनासीरधाटीभटः
त्रैयक्षं मकुटं पुनन्नवतु नः त्रैविक्रमो विक्रमः ।

क्षरन्त्यमृतमक्षरं यतिपुरन्दरस्योक्तय
श्चिरंतनसरस्वतीचिकुरबन्धसैरन्ध्रिकाः ॥ ३६

सुधाशनसुदुर्ग्रहश्रुतिसमष्टिमुष्टिन्धयः
कथाहवमसौ गतान्कपटसौगतान्खण्डयन् ।
मुनिर्मनसि लक्ष्मणो मुदमुदञ्चयत्यञ्जसा
मुकुन्दगुणमौक्तिकप्रकरशुक्तिभिः सूक्तिभिः ॥ ३७

कपर्दिमतकर्दमं कपिलकल्पनावागुरां
दुरत्ययमतीत्य तद्द्रुहिणतन्त्रयन्त्रोदरम् ।
कुदृष्टिकुहनामुखे निपततः परब्रह्मणः
करग्रहविचक्षणो जयति लक्ष्मणोऽयं मुनिः ॥ ३८

कणादपरिपाटिभिः कपिलकल्पनानाटकैः
कुमारिलकुभाषितैर्गुरुनिबन्धनग्रन्थिभिः ।
तथागतकथाशतैस्तदनुसारिजल्पैरपि
प्रतारितमिदं जगत्प्रगुणितं यतीन्द्रोक्तिभिः ॥ ३९

कथाकलहकौतुकग्रहगृहीतकौतस्कुत-
प्रथाजलधिसंप्लवग्रसनकुम्भसम्भूतयः ।
जयन्ति सुधियो यतिक्षितिभृदन्तिकोपासना-
प्रभावपरिपक्त्रिमप्रमितभारतीसम्पदः ॥ ४०

यतीश्वरसरस्वतीसुरभिताशयानां सतां
वहामि चरणाम्बुजं प्रणतिशालिना मौलिना ।
तदन्यमतदुर्मदज्वलितचेतसां वादिनां
शिरस्सु निहितं मया पदमदक्षिणं लक्ष्यताम् ॥ ४१

भजस्व यतिभूपतेरनिदमादिदुर्वासना
कदध्वपरिवर्तनश्रमनिवर्तनीं वर्तनीम् ।
लभस्व हृदय स्वयं रथपदायुधानुग्रह-
द्रुतप्रहृतिनिस्त्रुटद्दुरितदुर्वृतिं निर्वृतिम् ॥ ४२

कुमतिविहितग्रन्थग्रन्थिप्रभूतमतान्तर-
ग्रहिलमनसः पश्यन्त्यल्पां यतीश्वरभारतीम् ।
विकटमुरभिद्वक्षःपीठीपरिष्करणोचितः
कुलगिरितुलारोहे भावी कियानिव कौस्तुभः ॥ ४३

स्थविरनिगमस्तोमस्थेयां यतीश्वरभारतीं
कुमतिफणितिक्षोभक्षीबाः क्षिपन्तु भजन्तु वा ।
रसपरिमलश्लाघाघोषस्फुटत्पुटभेदनं
लवणवणिजः कर्पू (रार्घं) रोद्धं किमित्यभिमन्वते ॥ ४४

वहति महिलामाद्यो वेधास्त्रयीमुखरैर्मुखै-
र्वरतनुतया वामो भागः शिवस्य विवर्तते ।
तदपि परमं तत्त्वं गोपीजनस्य वशंवदं
मदनकदनैर्न क्लिश्यन्ते यतीश्वरसंश्रयाः ॥ ४५

निगमपथिकच्छायाशाखी निराशमहानिधि-
र्महितविविधच्छात्रश्रेणीमनोरथसारथिः ।
त्रिभुवनतमःप्रत्यूषोऽयं त्रिविद्यशिखामणिः
प्रथयति यतिक्ष्माभृत्पारावरीमविपर्ययाम् ॥ ४६

जडमतिमुधादन्तादन्तिव्यथौषधसिद्धयः
प्रमितिनिधयः प्रज्ञाशालिप्रपालनयष्टयः ।
श्रुतिसुरभयः शुद्धानन्दाभिवर्षुकवारिदा
यमगतिकथाविच्छेदिन्यो यतीश्वरसूक्तयः ॥ ४७

प्रतिकलमिह प्रत्यक्तत्त्वावलोकनदीपिका
यतिपरिबृढग्रन्थाश्रान्तां निरन्तरयन्ति नः ।
अकलुषप (रि) रज्ञानौत्सुक्यक्षुधातुरदुर्दशा-
परिणतफलप्रत्यासीदत्फलेग्रहिसुग्रहाः ॥ ४८

मुकुन्दाङ्घ्रिश्रद्धाकुमुदवनचन्द्रातपनिभाः
मुमुक्षामक्षोभ्यां ददति मुनिबृन्दारकगिरः ।

स्वसिद्धान्तध्वान्तस्थिरकुतुकदुर्वादिपरिष-
　　द्दिवाभीतप्रेक्षादिनकरसमुत्थानपरुषाः ॥　　४९

निराबाधा बोधायनफणितिनिष्यन्दसुभगा-
　　विशुद्धोपन्यासव्यतिभिदुरशारीरकनयाः ।
अकुण्ठैः कल्पन्ते यतिपतिनिबन्धा निजमुखै-
　　रनिद्राणप्रज्ञारसधमनिवेधाय सुधियाम् ॥　　५०

विकल्पाटोपेन श्रुतिपथमशेषं विघटयन्
　　यदृच्छानिर्दिष्टे यतिनृपतिशब्दे विरमति ।
वितण्डाहंकुर्वत्प्रतिकथकवेतण्डपृतना
　　वियातव्यापारव्यतिमथनसंरम्भकलहः ॥　　५१

प्रतिष्ठा तर्काणां प्रतिपदमृचां धाम यजुषां
　　परिष्कारः साम्नां परिपणमथर्वाङ्गिरसयोः ।
प्रदीपस्तत्त्वानां प्रतिकृतिरसौ तापसगिरां
　　प्रसत्तिं संवित्तेः प्रदिशति यतीशानफणितिः ॥　　५२

हतावद्ये हृद्ये हरिचरणपङ्केरुहयुगे
　　निबध्नन्त्यैकान्त्यं किमपि यतिभूभृत्फणितयः ।
शुनासीरस्कन्दद्रुहिणहरहेरम्बहुतभु-
　　क्प्रभेशादिक्षुद्रप्रणतिपरिहारप्रतिभुवः ॥　　५३

यथाभूतस्वार्था यतिनृपतिसूक्तिर्विजयते
　　सुधासंदोहाब्धिः सुचरितविपक्तिः श्रुतिगिराम् ।
कथादृप्यत्कौतस्कुतकलहकोलाहलहत-
　　त्रिवेदीनिर्वेदप्रशमनविनोदप्रणयि(नः)नी ॥　　५४

श्रुतिश्रेणीचूडापदबहुमते लक्ष्मणमते
　　स्वपक्षस्थान्दोषान्वितथमतिरारोपयति यः ।
स्वहस्तेनोत्क्षिप्तैः स खलु निजगात्रेषु बहुलं
　　गलद्भिर्जम्बालैर्गगनतलमालिम्पति जडः ॥　　५५

निरालोके लोके निरुपधिप(द)रस्नेहभरितो
यतिक्ष्माभृद्दीपो यदि न किल जाज्वल्यत इह ।
अहंकारध्वान्तं विजहति कथंकारमनघाः
कुतर्कव्यालौघं कुमतिमतपातालकुहरम् ॥ ५६

यतिक्ष्माभृद्दृष्टं मतमिह नवीनं तदपि किं
ततः प्रागेवान्यद्वद तदपि किं वर्णनिकषे ।
निशाम्यन्तां यद्वा निजमतितिरस्कार विगमा-
न्निरातङ्काष्टङ्कद्रमिडगुहदेवप्रभृतयः ॥ ५७

सुधासारं श्रीमद्यतिवरभुवः श्रोत्रकुहरे
निषिञ्चन्ति न्यञ्चन्निगमगरिमाणः फणितयः ।
यदास्वादाभ्यासप्रचयमहिमोल्लासितधियां
सदास्वाद्यं काले तदमृतमनन्तं सुमनसाम् ॥ ५८

यतिक्षोणीभर्तुर्यदिदमनिदं भोगजनता
शिरः श्रेणीजुष्टं तदिह दृढबन्धं प्रभवति ।
अविद्यारण्यानीकुहरविहरन्मामकमनः-
प्रमाद्यन्मातङ्गप्रथमनिगलं पादयुगलम् ॥ ५९

सवित्री मुक्तानां सकलजगदेनःप्रशमनी
गरीयोभिस्तीर्थैरुपचितरसा यामुनमुखैः ।
निरुच्छेदा निम्नेतरमपि समाप्लावयति मां
यदृच्छाविक्षेपाद्यतिपतिदयादिव्यतटिनी ॥ ६०

चिन्ताशेषदुरर्थदन्तुरवचःकन्थाशतग्रन्थिलाः
सिद्धान्ता न समिन्धते यतिवरग्रन्थानुसंधायिनि ।
मुक्ताशुक्तिविशुद्धसिद्धतटिनी।चूडालचूडापदः
किं कुल्यां कलयेत खण्डपरशुर्मण्डूकमञ्जूषिकाम् ॥ ६१

वन्दे तं यमिनां धुरन्धरमहं मानान्धकारद्रुहा
पन्थानं परिपन्थिनां निजदृशा रुन्धानमिन्धानया ।

दत्तं येन दयासुधाम्बुनिधिना पीत्वा विशुद्धं पयः
काले नः करिशैलकृष्णजलदः काङ्क्षाऽधिकं वर्षति ॥ ६२

काषायेण गृहीतपीतवसना दण्डैस्त्रिभिर्मण्डिता
सा मूर्तिर्मुरमर्दनस्य जयति त्रय्यन्तसंरक्षिणी ।
यत्प्रख्यापिततीर्थवर्धितधियामभ्यस्यतां यद्गुणान्
आसिन्धोरनिदंप्रदेशनियता कीर्तिः प्रजागर्ति नः ॥ ६३

लिप्से लक्ष्मणयोगिनः पदयुगं रथ्यापरागच्छटा-
रक्षारोपणधन्यसूरिपरिषत्सीमन्तसीमान्तिकम् ।
भिक्षापर्यटनक्षणेषु बिभरांबभूवे गलन्किल्बिषा
यद्विन्यासमिषेण प (भ्र) भ्रमकरीमुद्रां समुद्राम्बरा ॥ ६४

नानातन्त्रविलोभितेन मनसा निर्णीतदुर्नीतिभिः
कष्टं कुत्सितदृष्टिभिर्यतिपतेरादेशवैदेशिकैः ।
व्यासो हासपदीकृतः परिहृतः प्राचेतसश्चेतसः
क्लृप्तः केलिशुकः शुकः स च मुधाबाधाय बोधायनः ॥ ६५

अर्थ्या तिष्ठति मामिका मतिरसावाजन्मराजन्वती
पत्या संयमिनामनेन जगतामत्याहितच्छेदिना ।
यस्सारस्वतदुग्धसागरसुधासिद्धौपधास्वादिनां
प्रस्वापाय न बोभवीति भगवन्मायामहायामिनी ॥ ६६

शुद्धादेशवशंवदीकृतयतिक्षोणीशवाणीशत-
प्रत्यादिष्टबहिर्गतिः श्रुतिशिरःप्रासादमासीदति ।
दुग्धोदन्वदपत्यसन्निधिरुदासामोददामोदर-
श्लक्ष्णालोकनदौर्ललित्यललितोन्मेषा मनीषा मम ॥ ६७

आस्तां नाम यतीन्द्रपद्धतिजुषामाजानशुद्धा मति-
स्तत्राव्याजविदग्धमुग्धमधुरं सारस्वतं शाश्वतम् ।
को वा चक्षुरुदञ्चयेदपि पुरः साटोपतर्कच्छटा-
शस्त्राशस्त्रिविहारसंभृतरणास्वादेषु वादेषु नः ॥

पर्याप्तं पर्वचैषं कणचरणकथामाक्षपादं शिशिक्षे
मीमांसामांसलात्मा समजनिषि मुहुः साङ्ख्ययोगौ समाख्यम् ।
इत्थं तैस्तैर्यतीन्द्रत्रुटितबहुमृषातन्त्रकान्तारपान्थै-
रन्तर्मोहक्षपान्धैरहह किमिह नश्चिन्तनीयं तनीयः ॥ ६९

गाथा ताथागतानां गलति गमनिका कापिली क्वापि लीना
क्षीणा काणादवाणी द्रुहिणहरगिरः सौरभं नारभन्ते ।
क्षामा कौमारिलोक्तिर्जगति गुरुमतं गौरवाद्दूरवान्तं
का शङ्का शङ्करादेर्भजति यतिपतौ भद्रवेदीं त्रिवेदीम् ॥ ७०

विष्वग्व्यापिन्यगाधे यतिनृपतियशःसम्पदेकार्णवेऽस्मिन्
श्रद्धाशुद्धावगाहैः शुभमतिभिरसौ वेङ्कटेशोऽभिषिक्तः ।
प्रज्ञादौर्जन्यगर्जत्प्रतिकथवचस्तूलवातूलवृत्त्या
सप्तत्या सारवत्या समतनुत सतां प्रीतिमेतां समेताम् ॥ ७१

आशामतङ्गजगणानविषह्यवेगान्पादे यतिक्षितिभृतः प्रसभं निरुन्धन् ।
कार्यः कथाहवकुतूहलिभिः परेषां कर्णे स एष कवितार्किकसिंहनादः ॥ ७२

उपशमितकुदृष्टिविप्लवानामुपनिषदामुपचारदीपिकेयम् ।
कबलितभगवद्विभूतियुग्मां दिशतु मतिं यतिराजसप्ततिर्नः ॥ ७३

करतलामलकीकृतस (त्क) त्पथाः श्रुतिवतंसितसूनृतसूक्तयः ।
दिवसतारकयन्ति समत्सरान् यतिपुरन्दरसप्ततिसादराः ॥ ७४

इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्तचार्यकृतिषु
यतिराजसप्ततिः समाप्ता ॥

# द्रमिडोपनिषत्तात्पर्यरत्नावलिः

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

सारस्सारस्वतानां शठरिपुफणितिः शान्तिशुद्धान्तसीमा
मायामायामिनीभिः स्वगुणविततिभिर्बन्धयन्तीं धयन्ती ।
पारंपारम्परीतो भवजलधिभवन्मज्जनानां जनानां
प्रत्यक्प्रत्यक्षयेन्नः प्रतिनियतरमासन्निधानं निधानम् ॥ १

प्रज्ञाख्ये मन्थशैले प्रथितगुणरुचिं नेत्रयन् सम्प्रदायं
तत्तल्लब्धिप्रसक्तैरनुपधिविबुधैरर्थितो वेङ्कटेशः ।
तल्पं कल्पान्तयूनःशठजिदुपनिषद्दुग्धसिन्धुं विमथ्नन्
ग्रथ्नाति स्वादुगाथालहरिदशशतीनिर्गतं रत्नजातम् ॥ २

पाञ्चालीगात्रशोभाहृतहृदयवधूवर्गपुम्भावनीत्या
पत्यौ पद्मासहाये प्रणयिनि भजतः प्रेयसीपारतन्त्र्यम् ।
भक्तिः शृङ्गारवृत्त्या परिणमिति मुनेर्भावबन्धप्रथिम्ना
योगात्प्रागुत्तरावस्थितिरिह विरहो देशिकास्तत्र दूताः ॥ ३

भाषागीतिः प्रशस्ता भगवति वचनाद् राजवच्चोपचारात्
सा चागस्त्यप्रसूतात्विति परिजगृहे भूमिकाभेदयोग्या ।
यत्तत्कृत्यं श्रुतीनां मुनिगणविहितैः सेतिहासैः पुराणै-
स्तत्रासौ सत्त्वसीम्नः शठमथनमुनेः संहिता सार्वभौमी ॥ ४

आदौ शारीरकार्थक्रममिह विशदं विंशतिर्व्यक्ति साग्रा
सङ्क्षेपोऽसौ विभागं प्रथयति च ऋचां चारुपाठोपपन्नम् ।
सम्यग्गीतानुबद्धं सकलमनुगतं सामशाखासहस्रं
संलक्ष्यं साभिधेयैर्यजुरपि दशकैर्भात्यथर्वाङ्गिरसैश्च ॥ ५

प्राच्ये सेवानुगुण्यात्प्रभुमिह शतकेऽमंस्त मुक्तेरुपायम्
मुक्तप्राप्यं द्वितीये मुनिरनुबुबुधे भोग्यतात्रिस्तरेण ।

प्राप्यत्वोपायभावौ शुभसुभगतनोरित्यावादीत्तृतीये
ऽनन्यप्राप्यश्चतुर्थे समभवदितरैरप्यनन्याद्युपायः ॥ ६
देवः श्रीमान् स्वसिद्धेः करणमिति वदन्नेकमर्थं सहस्रे
सेव्यत्वादीन् दशार्थान् पृथगिह शतकैर्वक्ति तत्स्थापनार्थान् ।
ऐकैकश्यात्परत्वादिषु दशकगुणेष्वायतन्ते तथा ते
तत्तद्गाथागुणानामनुविधदति तत्पङ्क्तयः पङ्क्तिसङ्ख्याः ॥ ७
सेव्यत्वात् भोग्यभावात् शुभतनुविभवात् सर्वभोग्याधिकत्वात्
श्रेयस्तद्धेतुदानात् श्रितविवशतया स्वाश्रितानिष्टहृत्त्वात् ।
भक्तच्छन्दानुवृत्तेः निरुपधिकसुहृद्भावतः सत्पदव्यां
साहाय्याच्च स्वसिद्धेः स्वयमिह करणं श्रीधरः प्रत्यपादि ॥ ८
ब्रूते गाथासहस्रं मुरमथनगुणस्तोमगर्भं मुनीन्द्रः
प्रत्येकञ्चात्र गाथाः प्रथितविभुगुणाः स्पष्टमध्यक्षयामः ।
तत्रासङ्कीर्णतत्तद्दशकगुणशतस्थापनौचित्ययुक्तान्
ऐदम्पर्यावरुद्धानगणितगुणितान् तद्गुणानुद्गृणीमः ॥ ९
इच्छासारथ्यसत्यापितगुणकमलाकान्तगीतान्तसिध्य-
च्छुद्धान्ताचारशुद्धैरियमनघगुणग्रन्थिबन्धानुबद्धा ।
तत्तादृक्ताम्रपर्णीतटगतशठजिद्दृष्टसर्वीयशाखा-
गाथातात्पर्यरत्नावलिरखिलभयोत्तारिणी धारणीया ॥ १०

॥ अथ प्रथमशतकम् ॥

निस्सीमोद्यद्गुणत्वात् अमितरसतयाऽनन्तलीलास्पदत्वात्
स्वायत्ताशेषसत्तास्थितियतनभिदावैभवात् वैश्वरूप्यात् ।
त्र्यक्षब्रह्मात्मभावात् सदसदवगतेः सर्वतत्त्वेषु पूर्तेः
पश्यन् योगी परं तत्पदकमलनतावन्वशादात्मचित्तम् ॥ ११
स्वामित्वात् सुस्थिरत्वात् निखिलनिरुपधिस्वात्मविद्ग्राह्यभावात्
तादृक्सर्वानुकूल्यात् च्यवनविदितरप्राप्यवैषम्यवत्त्वात् ।

सर्वत्रापक्षपातात् शुभविभवतया मानसाद्यर्च्यभावात्
सङ्कोचोन्मोचकत्वात् जगदवनतयोपादिशत्सर्वयोग्यम् ॥ १२

बन्धार्हत्वात् स्वभक्तैरधिकतरगुणानन्तदिव्यावतारात्
सर्वेष्वासक्तिमत्त्वात् नतसुगमतया स्वप्रबोधप्रदत्वात् ।
ख्याताभिख्यादिचिह्नात्स्वरुचिवितरणात्सर्वकालाश्रयत्वात्
शर्वादेस्स्वाङ्गदानात्प्रहितपदतयाऽनन्तसौलभ्यमाह ॥ १३

त्राणे बद्धध्वजत्वात् शुभनयनतया स्वार्थलाभेऽर्थिभावात्
तिम्यन्मेघस्वभावात् जगदुपजननस्थापनातिप्रियत्वात् ।
कारुण्यात्तत्वयोगादनुगतमहिषीसन्निधेः सङ्गदैर्घ्यात्
नानाबन्धैः स्वरक्षावहिततमतया क्षाम्यतीत्याह कृष्णम् ॥ १४

सद्भीभव्यान् सुवाचस्सुचरितसुभगान् कृष्णसारूप्यसौम्यान्
स्वाहारोदारशीलान् तनुभृत्भगवल्लक्ष्मणो बाल्यगुप्तान् ।
छात्रस्वच्छन्दवृत्तीनभिगतशिशिरानन्तरङ्गोक्तियोग्यान्
आचार्यान्कृष्णलब्धानवृणुत शठजित्प्रेयसीदूतनीत्या ॥ १५

क्षुद्राह्वानाभिमुख्यात् निजमहिमतिरस्कारकार्चाप्रियत्वात्
सर्वत्राप्यङ्घ्रिदानात् सविधशयनतः स्वाङ्घ्रिसक्तैकरस्यात् ।
गोपाद्याप्तेरशेषेक्षणविषयतया भक्तवस्तुप्रसक्तेः
श्लिष्यन्नाशव्यपोहात् तदहितशमनात्प्राह नाथं सुशीलम् ॥ १६

अक्रीतैरर्च्यभावात् अनियतविविधाभ्यर्चनात् अल्पतुष्टेः
प्रह्वावर्ज्येशभावात् स्वविषयनियतेष्वादरात् स्वादुभूम्ना ।
पादासक्तप्रसक्तेःसकृदुपसदने मोक्षणात् धर्मसौस्थ्यात्
क्षिप्रक्षिप्ताहितत्वात् सुकरभजनतां माधवस्याभ्यधत्त ॥ १७

सचित्ताकर्षहेतोरघशमननिधेर्नित्यभोग्यामृतस्य
त्यागे हेतूज्झितस्य प्रवहदुपकृतेर्दुस्त्यजस्यानुभूतेः ।
त्यागाकाङ्क्षानिरोद्धुःश्रितहृदयपृथक्कारनित्याक्षमस्य
स्वात्माश्लिष्टस्य गायच्छ्रमहरयशसः सेवनं स्वाद्ववोचत् ॥ १८

सूरीणां स्वैरसेव्ये स्वयमवतरति क्षुद्रदिव्यैकनेत्रे
गोपाद्यर्थं धृताद्रौ श्रिततनुरसिके वामनीभावदृश्ये ।
सच्चित्तानन्यवृत्तौ विभवसमतनौ स्वायुधारूढहस्ते
नीचोच्चग्राहापादे निरुपधिमृजुतां नीरवर्णे जगाद ॥ १९

पर्यन्तेऽत्के च दृष्टं स्वविरहविधुरं डिम्भवत्पार्श्वलीनं
चित्ते क्लृतप्रवेशं भुजशिखरगतं तालुसिंहासनस्थम् ।
चक्षुर्मध्ये निविष्टं स्थितमलिकतटे मस्तके तस्थिवांसं
प्रत्याहारोक्तरीत्या विभुमनुभुभुजे सात्म्यभोगप्रदानात् ॥ २०

विष्वग्विक्रान्तिदृश्यं विगणनसुलभं व्यक्तपूर्वोपकारं
स्वान्तस्यैकाग्र्यहेतुं स्वयमुदयजुषं बन्धमात्रोपयातम् ।
चिन्तास्तुत्यादिलक्ष्यं नतजनसततश्लेषिणं दर्शितार्चे
स्मृत्यै चित्ते मिषन्तं स्ववितरणमहौदार्यतुष्टोऽभ्यचष्ट ॥ २१

आदावित्थं परत्वात् अखिलसमतया भक्तसौलभ्यभूम्ना
निश्शेषागस्सहत्वात् कृपणसुघटनाच्छक्यसंराधनत्वात् ।
स्वादुस्वोपासनत्वात् प्रकृतिऋजुतया सात्म्यभोगप्रदत्वात्
अव्याजोदारभावादमनुत शतके माधवं सेवनीयम् ॥ २२

॥ अथ द्वितीयशतकम् ॥

निद्राविच्छेदकत्वात् अरतिजननतोऽजस्रसंक्षोभकत्वात्
अन्वेष्टुं प्रेरकत्वात् विलयावितरणात् कार्श्यदैन्यादिकृत्त्वात् ।
चित्ताक्षेपाद्विसंज्ञीकरणत उपसंशोषणावर्जनाभ्यां
दृष्टास्वादस्य शौरेः क्षणविरहदशादुस्सहत्वं जगाद ॥ २३

पूर्णैश्वर्यावतारं भवदुरितहरं वामनत्वे महान्तं
नाभीपद्मोत्थविश्वं तदनुगुणदृशं कल्पतल्पीकृताब्धिम् ।
सुप्तं न्यग्रोधपत्रे जगदवनधियं रक्षणायावतीर्णं
रुद्रादिस्तुत्यलीलं व्यवृणुत ललितोत्तुङ्गभावेन नाथम् ॥ २४

चित्रास्वादानुभूतिं प्रियमुपकृतिभिः दास्यसारस्यहेतुं
स्वात्मन्यासार्हकृत्यं भजदमृतरसं भक्तचित्तैकभोग्यम् ।
सर्वाक्षप्रीणनार्हं सपदि बहुफलस्नेहमास्वाद्यशीलं
सभ्यैः साध्यैस्समेतं निरविशदनघाश्लेषनिर्वेशमीशम् ॥ २५

प्र ादार्थे नृसिंहं क्षपितविपदुमावल्लभं क्षिप्तलङ्कं
क्ष्वेलप्रत्यर्थिकेतुं श्रमहरतुलसीमालिनं धैर्यहेतुम् ।
त्राणे दत्तावधानं स्वरिपुहतिकृताश्वासनं दीप्तहेतिं
सत्प्रेक्षारक्षितारं व्यसननिरसनव्यक्तकीर्तिं जगाद ॥ २६

स्वप्राप्त्या सिद्धकान्तिं सुघटितदयितं विस्फुरत्तुङ्गमूर्तिं
प्रीत्युन्मेषातिभोग्यं नवघनसुरसं नैकभूषादिदृश्यम् ।
प्रख्यातप्रीतिलीलं दुरभिलपरसं सद्गुणामोदहृद्यं
विश्वव्यावृत्तचित्रं व्रजयुवतिगणख्यातरीत्याऽन्वभुङ्क्त ॥ २७

स्वास्वादख्यापकत्वात् श्रितनियतदृशेः नैकभोगप्रदानात्
त्यागानर्हप्रकाशात् स्थिरपरिचरणस्थापनात्पापभङ्गात् ।
दुस्साधार्थस्य सिद्धेर्विरहभयकृतेः दुर्विभेदात्मयोगात्
नित्यानेकोपकारात् स्वविरहचकितं प्रैक्षताम्भोरुहाक्षम् ॥ २८

सर्वादिस्सर्वनाथस्त्रिभुवनजननीवल्लभः स्वाश्रितार्थी
विष्वग्व्याप्त्याऽतिदीप्तो विमतनिरसनः स्वाङ्घ्रिसद्भक्तिदायी ।
विश्वाप्त्यै वामनाङ्गः स्वविभवरसदः स्वान्तनिर्वाहयोग्यः
स्वार्थेहो बन्धमोक्ता स्वजनहिततया द्वादशाख्याभिरूचे ॥ २९

प्राप्याकारोपपत्त्या जनिपरिहरणात् विश्वसृष्ट्यादिशक्तेः
निस्सीमानन्ददेशान्वयत उपजगौ रक्षणार्थावतारात् ।
सुप्रख्यातानुभावाद्विविधविहरणाद्व्याप्तिवैचित्र्यवत्त्वात्
भक्तैर्द्राग्दृश्यभावादखिलफलकृतेर्मुक्तिसौख्यं मुकुन्दे ॥ ३०

श्रद्धेयस्वाङ्घ्रियोगं शुभमतिकरदं स्तोत्रसामर्थ्यहेतुं
स्वार्थीकारोपकारं स्मृतिरसशमितात्मादरं प्रीतिषरश्यम् ।

प्राप्तौ कालक्षमत्वप्रदममृतरसध्यानमात्मार्पणार्हं
वैमुख्याद्वारयन्तं वृतपरिचरणं चक्रपाणिं जगाद ॥ ३१
दीप्ताश्चर्यस्वभावं मुखरितजलजं वर्षुकाम्भोदवर्णं
शैलच्छत्राभिगुप्ताश्रितमतिविलसद्धेतिमापीतगव्यम् ।
संरम्भोत्क्षिप्तभूतिं प्रणमदनुगुणं पूतनाचेतनान्तं
पूर्वाचार्यं श्रुतीनां शुभसविधगिरिस्थानतो निर्विवेश ॥ ३२
इत्यब्रूतात्यसह्यक्षणविरहतया मानुषत्वे परत्वात्
सर्वास्वादत्वभूम्ना व्यसनहरतया स्वाप्तिसम्प्रीतिमत्त्वात् ।
वैमुख्यत्रासयोगान्निजसुहृदवनान्मुक्तिसारस्यदानात्
कैङ्कर्योद्देश्यभावाच्छुभनिलयतया चातिभोग्यं द्वितीये ॥ ३३

॥ अथ तृतीयशतकम् ॥

सुश्लिष्टाकल्पमङ्गैरनुपमसुषमं वक्ति निस्सीमदीप्तं
स्वान्तस्वादुस्वदेहं सुखभजनपदं मण्डिताङ्गं महिष्या ।
स्तोत्रातिक्रान्तकीर्तिं मलिनिमरहितौज्ज्वल्यमिष्टोपवाह्यं
वीताश्चर्यत्रिणेत्रप्रभृतिसुरनुतिं नित्रसौन्दर्यविद्धम् ॥ ३४
स्रष्टा क्रान्ता च लोकान् हृतधरणिभरोऽनन्यभोग्याङ्घ्रियुग्मः
चित्तोग्रन्नीलरूपो निरवधिरसदस्वाङ्घ्रिरध्यक्षमूर्तिः ।
नित्योपास्यस्वपादो निखिलवसुमतीगोपनस्वाङ्घ्रिवृत्तिः
मुष्णन्मूर्तिप्रतीत्या यमपरवशतां प्रैक्षि लोकैकनाथः ॥ ३५
स्थानोत्कर्षात्सुदीप्तं श्रमहरवपुषं स्वाङ्गपर्याप्तभूषं
तेजिष्ठं नीचयोगात् प्रणमितभुवनं पावनं सन्नतानाम् ।
प्राप्त्यर्हस्थानमंहःप्रशमनविषयं बन्धविच्छेदिपादं
भेजे शीघ्राभियानक्षमशुभवसतिं लम्भितार्चाभिमुख्यः(म्) ॥ ३६
भूतैस्तत्कार्यभूतैः शुभनिजवपुषा दीप्तिमद्भिः पदार्थैः
पथ्यास्वादोपपन्नैः श्रुतिसुखसुभगाशेषशब्दप्रपञ्चैः ।

नानाकारैःपुमर्थैः जगदधिपतिभिश्चेतनाचेतनौघैः
जुष्टं दोषैरदुष्टं निखिलतनुतया संप्रतुष्टाव तुष्टः ॥ ३७

ग्राहग्रस्तेभमोक्षे सुररिपुदमने गोकुलत्राणकार्ये
(नीला)गोदार्थोक्षावमर्दे सदहितमथने सिन्धुपर्यङ्कयोगे ।
क्षोणीभारव्यपोहे क्षितिधरवसतौ निर्जराराध्यतायां
विश्वारम्भे च शौरेः शुभतनुसुषमोन्मादकत्वं जगाद ॥ ३८

पद्माक्षीं पापहन्त्रीं मणिरुचिममराधीशचिन्त्याङ्घ्रिपद्मां
तत्तादृक्कुन्तलश्रीसुघटितमकुटां भावुकप्राप्यपादाम् ।
शुद्धास्वाद्यस्वभावां यमभटमथनीं भक्तधीवृत्तिभव्यां
नीचोच्चाभीष्टवृत्तिं हरितनुमवदन्निर्मलार्चानुरक्तः ॥ ३९

स्फीतालोकातिभूम्ना पृथुबहुभुजया दिव्यमाल्यास्त्रभाजा
सद्वस्त्राकल्पक्लृप्त्या त्रिदशरसकृता रक्षणौन्मुख्यवत्त्या ।
मुक्तैरुत्तंसिताङ्घ्र्यास्थिरधृतरमया श्यामया नित्यसत्या
शौरेःकान्त्याजितानां स्वबहुमतजनस्वामितामन्वमंस्त ॥ ४०

चित्ताकृष्टिप्रवीणैरभिलपनसुखैः स्पर्शवाञ्छां दुहानैः
आतन्वानैर्दिदृक्षां श्रुतिहितमहितैरात्मनित्यादराहैंः ।
विश्लेषाक्रोशकृद्भिः स्मरदरतिहरैर्दत्तसायुज्यसङ्गैः
कुर्वाणैर्बाललौल्यं मिलितगुणगणैः नित्यदृश्याङ्गमाह ॥ ४१

रम्यस्थानादियोगादमितविभवतः सत्पथप्रापकत्वात्
सम्यक्सायुज्यदानात् अनघवितरणात्सर्वशेषित्वचिह्नात् ।
प्रख्याताख्यासहस्रैरवतरणरसैः भुक्तिमुक्त्याभिमुख्यात्
त्रैलोक्योत्पादनाच्च स्तुतिविषयमजं व्याहरन्निन्दितान्यः ॥ ४२

प्रादुर्भावानुभावात् परिजनविभवात् पावनालङ्क्रियत्वात्
जैत्रव्यापारयोगात् अघटितघटनाद्देवभावप्रसिद्धेः ।
आश्चर्यक्रीडनत्वात् सरसिजनिलयानन्दनात् छन्दवृत्तेः
ऐश्वर्यव्यक्तिमत्वादघशमनतनुं केशवं व्याजहार ॥ ४३

एवं सौन्दर्यभूम्ना तनुविहितजगत्कृत्यसौभाग्ययोगात्
स्वेच्छासेव्याकृतित्वात् निखिलतनुतयोन्माददानार्हकान्त्या ।
लभ्यार्चावैभवत्वात् गुणरसिकगुणोत्कर्षणादक्षकृष्ट्या
स्तुत्यत्वात्पापभङ्गाच्छुभसुभगतनुं प्राह नाथं तृतीये ॥ ४४

॥ अथ चतुर्थशतकम् ॥

श्रीमान्नारायणस्स्वाम्यनुगुणमकुटो वीरदामाङ्कमौलिः
दुर्दान्तारातिहन्ताऽद्भुतनियततनुः कल्पपाथोधितल्पः ।
विश्वाद्यंज्योतिरुर्वीधरफणिशयनो वेदरूपस्वकेतुः
निर्धूताशेषदोषः प्रभुरथ कथितस्सुस्थिरैश्वर्यसीमा ॥ ४५
शैत्यात्सौगन्ध्यभूम्ना रुचिरुचिरतया पोषणादाभिरूप्यात्
सन्दर्भात्पुष्पसङ्गान्महिततुलसिकामालया शङ्कृतश्च ।
चक्राधीशस्य योगाद्वटदलशयनाद्यर्हणीयापदानैः
सम्पन्नानेकभोग्यं निरविशदजितं कृष्णमूर्तिं शठारिः ॥ ४६
चेतोगन्धानुलेपः स्तुतिवचनकृतस्स्वपटोऽञ्जल्युपात्तालङ्कारः
प्राणवासी कलितवरशिरोभूषणश्चेतनेन ।
शीर्ष्णा सत्पादपीठः स्वतनुसदनतामात्मरूपे वितन्वन्
अन्योन्यात्मत्वयोगात्प्रभुरगणि मिथःश्लिष्टभावोऽथ तेन ॥ ४७
भूम्याद्यैस्सागराद्यैः ज्वलनशशिमुखैः वस्तुभिर्वत्सपूर्वैः
नृत्यद्भिः स्वैश्च लोकादिभिरथ पृथिवीक्षिद्भिरात्मीयदासैः ।
सौलभ्यैश्वर्यवर्गैरपि च गुणगणैः वासुदेवो वियोगे
स्वीयैस्तुल्यैश्च भक्तान्व्यथयति मधुहेत्यब्रवीत्कारिसूनुः ॥ ४८
आपन्नानन्यबन्धौ सरसिजनिलयावल्लभे सान्द्रमोदे
भक्ताघध्वंसशीले तदुचितसमयाश्वासदानप्रवीणे ।
कर्पूरालेपशोभे समधिकरहिते तोषके सर्वपूर्णे
कृष्णे स्तुत्यादिभाजां शठरिपुरवदत् धन्यतां निन्दितान्यः ॥ ४९

इच्छासारथ्ययोगात् प्रहरणवनाच्छ्रीतुलस्याढ्यमौलेः
स्तुत्याङ्घ्र्योःपादधूल्या स्वजनभजनतत्पादधूलीनमोभिः ।
तन्मूलस्वाङ्घ्रिनुत्या तदितरभजनत्यागपूर्वोपसत्त्या
देवं प्राचिख्यपत् स्वप्रणयिषु भिषजं केसरस्रग्विभूषः ॥ ५०

आपद्बन्धुत्वदीप्तं निरवधिकमहानन्ददं क्रान्तलोकं
दुर्दर्शं देवतानां पितरमनुपधिं सर्वभूतान्तरस्थम् ।
पूर्णज्ञानैकमूर्तिं धृतशुभतुलसीं चक्रनाथं श्रुतीनां
विश्रान्तिस्थानमीशं विशदबहुगुणं प्राह खिन्नः शठारिः ॥ ५१

दुश्शीलो मांसचक्षुः निरवधिदुरितो वीतलज्जो विलोलः
प्रेक्षाहीनोऽन्यसङ्गात् कृतमपि लघयन् (शील)श्रीशमन्तर्दधानः ।
कर्मज्ञानादिशून्यो निरुपधिविहितां ज्ञानदार्ष्टिं विनिन्दन्
प्रख्याप्यैवं स्वदोषान् पतिगुणरसिकस्तद्दिदृक्षां चचक्षे(क्रे) ॥ ५२

सौन्दर्यादौ स्वकीये हृदि च खनिकरे पूर्णतायां च कान्तौ
सम्यग्ज्ञाने प्रकाशे वलयरशनयोर्वर्ष्मणि स्वस्वरूपे ।
स्याद्विष्णोर्यदुपेक्षा तदिदमखिलमुन्मूलनीयं तदीयैः
इत्यूचे कारिसूनुस्तदुदरि कथयंस्तं शिवाद्याश्रिताङ्गम् ॥ ५३

कारुण्यादब्धिमाथी तदुपरि शयिनः तत्समानाङ्गवर्णः
ख्यातौदार्यस्स्वदाने रुचिरमणिरुचिः वेषतोऽतीव भोग्यः ।
आत्मत्वेनानुभाव्यो दुरधिगमपदो बन्धमोक्षस्वतन्त्रः
स्वान्यप्रेमोपरोधी स्वदत इह विभुस्तत्पदोत्कण्ठिताय ॥ ५४

तापैस्संबन्धिदुःखैस्स्वविभवमरणैः तापकृद्भोग्यसङ्गैः
दुर्गत्याज्ञातिवृत्तेः अनितरविधुतेरन्धकारानिरोधात् ।
प्रह्वीभावोज्झितत्वात् प्रलघुसुखपरिष्वङ्गतश्चातिशोच्यं
विश्वं द्रष्टुं न शक्तो निजपदनयने नाथति स्म स्वनाथम् ॥ ५५

स्वानां निर्वाहकत्वात् अहिपतिशयनादब्धिवर्णस्वभावात्
अत्यन्तोदारभावाद्बलभिदुपलवद्दर्शनीयत्वयोगात् ।

सन्मौलित्वात्तुलस्या प्रियकरणमुखैरण्डसृष्टौ पटुत्वात्
सुप्रापत्वादिभिस्तं फलमतुलपवैर्द्धेजुषामेष नाथम् ॥ ५६
कल्पान्तेऽपि स्थितत्वात् सकलसुरगणस्रष्टृभावाज्जनानां
रक्षाद्यापादकत्वात् शिवविधिभरणात् सर्वदेवात्मभावात् ।
तत्तत्कर्मानुरूपं फलवितरणतो वैनतेयध्वजत्वात्
मार्कण्डेयावनादेः प्रभुमथ शठजित् प्राह सर्वामरोच्चम् ॥ ५७
नित्यैश्वर्यं तु तुर्ये सहजबहुलसद्भोग्यमन्योन्यसक्तम्
क्लेशापादिस्वतुल्यं स्वजनकृतकृतार्थीकृतिं स्नेहिवद्यम् ।
संयुक्तं सद्गुणौघैः स्वजनपरिहृतोपेक्ष्यमिष्टार्थरूपम्
श्रेष्ठं निःशेषभोग्यादमनुत शतके देवतासार्वभौमम् ॥ ५८

॥ अथ पञ्चमशतकम् ॥

चक्रस्फायत्करत्वात् स्वजनवशतया रक्षणोद्युक्तभावात्
भव्यत्वात्स्वात्मदानात् अमलतनुतया श्रीगजेन्द्रावनाच्च ।
नानाबन्धुत्वयोगाद्विपदि सखितया व्याजमात्राभिलाषात्
कारुण्याधीनवृत्तिं कमलदृशमवैत्कारिसूनुः कृतार्थः ॥ ५९
पाथोधिप्रौढकान्तौ सरसतुलसिकालङ्कृतौ दातृभावे
वैकुण्ठत्वे च चक्रप्रहरणवशितादेवतास्थापनादौ ।
स्वानामच्यावनादौ सकलनियमने सर्वकर्मेज्यभावे
नित्यासक्तैस्स्वभक्तैः जगदघशमनं प्राह कृष्णं शठारिः ॥ ६०
ज्योतीरूपाङ्गकत्वात्सरसिजनयनानिष्टविध्वंसकत्वात्
मेघौघश्यामलत्वात् श्रितसरसतयोत्कृष्टसौलभ्ययोगात् ।
रक्षायां चावधानात् सुभगतनुतया सोपकारास्त्रवत्त्वात्
स्वानां प्रेमातिमात्रं जनयति भगवानित्यवादीत् शठारिः ॥ ६१
आपद्बन्धुत्वकीर्त्या यदुकुलजननाद्धीरवीरत्वकीर्त्या
लोकानां विक्रमाद्याश्रितदुरितहृतेरद्भुतैश्चेष्टितैश्च ।

चक्राद्यस्त्रान्वितत्वात् कमलनयनतस्संपदा वामनत्वात्
क्षीराब्धौ शेषशायी जगदवनमहादीक्षितोऽज्ञायि तेन ॥ ६२

शङ्खाद्यैः यज्ञसूत्रादिभिरपि च तथा शार्ङ्गमुख्यैस्तुलस्या
बिम्बोष्ठाद्यैस्सुनासाव्रततिनिरवधिज्योतिरूर्जस्विमूर्त्या ।
नेत्राब्जाद्यैरशेषाभरणसुषमया स्वैश्च भक्तैर्मनोज्ञो
देवः स्वनामजस्रं स्मृतिविषयतया भाति चेत्यभ्यधायि ॥ ६३

स्रष्टृत्वाद्यैः जगत्याः सकलविधकलावर्तकत्वेन भूता-
न्तर्यामित्वेन क्ष्म्युद्धरण(भ)परतया भूभराक्रान्तेश्च ।
शैलेन्द्रोद्धारणाद्यैः स्वजनहिततया ब्रह्मरुद्रेन्द्रभावात्
दुष्कर्मोन्मूलनाद्यैः प्रभुरनिशमहम्बुद्धिबोध्योऽन्वभावि ॥ ६४

सर्वाधीशेशयत्वादरिदरभरणात्सानुकम्पत्वयोगात्
सत्साहाय्यादशेषान्तरनिलयतया भूससुद्धृत्युदन्तैः ।
सर्वेषां तातभावात् इतरजनदुराधर्षनादेश्शरण्यं
दीनानां प्राह विष्णुं शठजनमथनो देवतासार्वभौमम् ॥ ६५

निस्सौहित्यामृतत्वात् स्ववशजनितयाऽनन्यभावप्रदानात्
मर्यादातीतकीर्त्या नलिननयनतो नायकत्वात्सुराणाम् ।
सर्वश्रैष्ठ्यादियोगादनितरगतिताद्यावहासन्नभावा-
द्धास्ये स्वे स्थापयेत्स्वान्हरिरिति शठजित्स्थापयामास कृष्णम् ॥ ६६

स्वामित्वात्संश्रितानामुपकरणरसात्स्वेष्टसंश्लेषकत्वात्
सर्वास्वादत्वभूम्ना कपटवटुतया दारुणापत्सखत्वात् ।
दिव्यस्थानोपसत्त्या भ्रमदरिभरणाच्चापि नारायणत्वात्
अत्यासन्नः श्रितानां भवति हरिरिति प्राह कारिस्तनूजः ॥ ६७

प्रादुर्भावादिवृत्तैः वृषगणदमनात् पूतनाशातनाद्यैः
मोहार्थं बौद्धकृत्यैः गिरिवरभजनस्वीकृतेः स्थानभेदैः ।
तेजोध्वान्तादिभावाज्जलनिधिशयनाद्भिक्षणाद्यैस्त्रिपद्याः
पीयूषस्पर्शनाद्यैःशिथिलयति हरिः स्वीयहृच्चेत्यथोचे ॥ ६८

इत्थं कारुण्यनिघ्नं दुरितहरजनं प्रेम तीव्रं दुहानं
लोकानां रक्षितारं स्मृतिविषयमहम्भावनागोचरं च ।
दीनानां सच्छरण्यं स्वरसकृतनिजप्रेष्यतावाञ्छमूचे
प्राप्तं शक्तिप्रदं श्रीपतिमिह शतके श्रेयसामेकहेतुम् ॥ ६९

॥ अथ षष्ठशतकम् ॥

चक्रित्वात्स्वामिभावात् विपदि सखितया बिम्बदृश्याधरत्वात्
अब्धिश्यामात्मकान्त्या धृततुलसितया निर्जराधीशभावात् ।
रक्ताभास्याङ्घ्रिभावात् पृथुमकुटतयाऽऽश्चर्यचर्याविशेषैः
लङ्काध्वंसाच्च कृष्णं शठजिदकथयद्दौशिकद्वारगम्यम् ॥ ७०
पूर्णत्वाद्गोपनारीजनसुलभतया लोडनादम्बुराशेः
न्यग्रोधाग्रेशयत्वात् अरिसुभगतया श्रीमहीवल्लभत्वात् ।
निर्दोषोत्तुङ्गभावान्निरवधिकयशस्सद्वशीकारिदृक्त्वात्
मोक्षस्पर्शेच्छया च स्वयमभिसरतीत्याह कृष्णं शठारिः ॥ ७१
सम्पद्दारिद्र्यभावादसुखसुखकृतेः पत्तनग्रामभावात्
पुण्यापुण्यादिभावात् कपटऋजुतया सर्वलोकादिभावात् ।
दिव्यादिव्याङ्गवत्वात्सुरदितिजगणास्निग्धशत्रुत्वकीर्त्या
छायाच्छायादिभावादघटितघट(कं)नं प्राह कृष्णं शठारिः ॥ ७२
रासक्रीडादिकृत्यैः विविधमुरलिकावादनैर्मल्लभङ्गैः
गोपीबन्धार्हभावात् व्रजजननमुखैः कंसदैत्यादिभङ्गैः ।
प्रादुर्भावैर्निहीनेष्वसुरभुजवनच्छेदमुख्यैश्चरित्रैः
आकर्षेत्सर्वचित्तं हरिरिति कथयामास कारेरपत्यम् ॥ ७३
शङ्खाद्यक्रादितश्च त्रिदशसुरतया सिन्धुशायित्वभूम्ना
तद्वचोदारभावात् अरुणसरसिजाक्षत्वचिह्नेन देवः ।
देवीभिःसेव्य(देव्यासंसृष्ट)भावादतिसुलभतया स्वेष्वतिस्निग्धभावात्
बन्धुभ्यस्स्वान्मुरारिर्विघटयति हठादित्यवोचच्छठारिः ॥ ७४

पारम्याद्यैश्च पञ्चायुधविहृतिमुखैः ब्रह्मणस्स्रष्टृभावात्
देवानां स्वामिभावादपि(भि) सुभगतयाऽलंकृतेः कुन्दभङ्गात् ।
प्रादुर्भावैश्च सर्वान्तरनिलयतयाऽहंममत्वेऽतिधैर्यं
चातुर्यादीनि नृणामपहरति हरिश्चेत्यभाणीच्छठारिः ॥ ७५

पारम्याद्भव्यभावात् स्रगभिहितिमुखैः श्रीशतैश्वर्यभूम्ना
स्नेहित्वादाभिरूप्यात् श्रितपरवशतासर्वलोकेशताद्यैः ।
धृत्याद्रेरादिहेतुं मुरमथनमथ व्याहरत्संश्रितानां
वेदानागस्त्यभाषावपुष उदधरत् श्रेयसे देहिनां यः ॥ ७६

लोकस्रष्टृत्वशक्त्याऽऽयुधसुभगतया जिष्णुसारथ्ययोगात्
स्रग्भ्राड्देवेशभावाद्गरुडरथतया स्वाश्रिते पक्षपातात् ।
कान्त्या साम्राज्ययोगात् अवतरणदशास्पष्टपारम्यतश्च
स्वीयायत्तस्वभूतिद्वयमथ कथयामास देवं शठारिः ॥ ७७

सर्वात्मत्वाज्जगत्याःक्रमणत उत संरक्षणाद्विष्टपानां
शत्रुध्वंसात्परत्वाद्यभिमतदशया पञ्चधाऽवस्थितत्वात् ।
निर्वाहादण्डकोट्या बुधदयिततया सर्वशीर्ष्ण्यङ्घ्रिदानात्
मोक्षेच्छोत्पादकत्वाद्धरिमथ शठजिद्व्यनर्हाद्वियोगम् ॥ ७८

आपत्संरक्षणादर्युपकरणतया मेघसाम्यादिभूम्ना
स्वानां विश्वासदानात् सुरगणभजनाद्दिव्यदेशोपसत्त्या ।
प्राप्याप्राप्यत्वयोगात् स्वजनविजनयोः सम्प्रपत्तव्यभावात्
ऊचे नाथं शरण्यं श्रुतिशतविदितं वेङ्कटेशं शठारिः ॥ ७९

इत्थं सद्वारगम्यं स्वयमितमसहस्याथिनां योजनार्हं
कर्षन्तं स्वैश्चारैत्रैः विघटितविजनं स्वान्वितस्तेयदक्षम् ।
धृत्यादीनां निदानं घटकवशमहाभूतियुग्मं शठारिः
वैघट्यस्याप्यनर्हं प्रपदनसुलभं प्राह षष्ठे शरण्यम् ॥ ८०

॥ अथ सप्तमशतकम् ॥

निस्सङ्ख्याश्चर्ययोगादतिमधुरतयाऽथो जगत्कारणत्वात्
न्यग्रोधार्हत्वभूम्ना त्रिदशपतितया वाङ्मनस्सन्निधानात् ।
पीयूषस्पर्शनाद्यैरखिलपतितया लोकसंरक्षणाद्यैः
शाठ्याशङ्कां सहेत त्रितनुरसुरहेत्याह चिञ्चान्तिकस्थः ॥ ८१

श्रीरङ्गे सन्निधानात् निखिलजगदनुस्स्रष्टृताद्यैःशुचित्वात्
विध्वस्तानिष्टभावादुरगशयनतः पुंसु कर्मानुरूपम् ।
शर्माशर्मप्रदानाज्जलदतनुतयोपक्रियातत्परत्वात्
स्वामी स्वानां विगर्हामुपशमयति चेत्याह धीमान् शठारिः ॥ ८२

पद्माक्षत्वेन हृत्स्थः परमखनिलयः स्वोपकारी विगर्ज-
च्छङ्खोऽनिष्टप्रहर्ताऽऽदरविलसनकृद्रक्षकोऽम्भोधिदृश्यः ।
आपत्संरक्षकश्रीमकरत्नरलसत्कुण्डलस्स्वाङ्गकान्त्या
स्वेषु स्वं गोतृभावं प्रकटयति हरिश्चेत्यशंसच्छठारिः ॥ ८३

विक्रान्त्या विष्टपानाममृतमथनतश्चोद्धृतेर्भूतधात्र्याः
कल्पे लोकादनाच्च क्षितिभरहरणाद्दैत्यराजप्रहारात् ।
लङ्कासङ्कोचकत्वादसुरभुजवनच्छेदनाल्लोकसृष्टेः
धृत्या गोवर्धनाद्रेः स्फुटजगदवनप्रक्रियं श्रीशमाह ॥ ८४

साकेते मुक्तिदानात् स्थिरचरजनुषां सर्वशो रक्षकत्वात्
चैद्ये सायुज्यदानाज्जगदुदयकृतेरुद्धृतेर्भूमिदेव्याः ।
याच्ञार्थे वामनत्वाच्छिवभजकमुनेर्मोक्षदानाद्युदन्तैः
स्नेहं सर्वाश्रयं स्वं प्रकटयति हरिश्चेत्यथाज्ञायि तेन ॥ ८५

नाभीपद्मोज्ज्वलत्वात् विधिशिवभजनीयाङ्घ्रिभावाद्गवां च
त्राणाद्यैः सर्वभूतान्तरनियमनतः संश्रिते भव्यभावात् ।
ब्रह्माद्यारात्तिमोक्षादसुरनिरसनात् त्रातरक्षोनुजत्वात्
स्वीयाक्रन्दापहारी भवति च भगवानित्यवादीत् शठारिः ॥ ८६

दृग्भ्यां पद्माकृतिभ्याममरतरुलतानासिकातोऽधरेण
भ्रूचापेन स्मितेनाप्यथ मकरलसत्कुण्डलाभ्यां विशिष्टः ।

फालेनार्धेन्दुभासाऽमलमुखशशिना नेत्रशोभादिभाजा
श्रीमान् देवः किरीटी स्मृतिविशदतनुर्भाति चेत्यभ्यधायि ॥ ८७
भूतैश्चन्द्रार्यमाद्यैः सकलयुगगतैः वस्तुभिः चेतनाद्यैः
स्वैर्लोकानां नियत्या स्मरणतदितरोत्पादनात् माननाद्यैः ।
दुर्ज्ञेयत्वात् स्वभाजां बहुशुभकरणात् वेदसंवेद्यभावात्
श्रीनानाश्चर्यनानाविभव इति ततः श्रीधरः प्रत्यपादि ॥ ८८
स्वामित्वाश्चर्यभावादपि च करुणया दत्तवाग्जृम्भणत्वात्
उज्जीवापादकत्वात् अघटितघटनाशक्तिवैकुण्ठयोगात् ।
शुद्धस्वान्तत्वचक्रायुधजलधिसुतावल्लभत्वान्वितत्वात्
स्वे स्तोत्रे विष्णुरप्रत्युपकृतिविषये स्वान्युनक्तीत्यगायत् ॥ ८९
वैकुण्ठे नित्ययोगात् श्रितविवशतयाऽनन्तकीर्त्युज्ज्वलत्वात्
शेषेशायित्वरुक्मिण्यभिमतसुरजिद्बाणदोःखण्डनाद्यैः ।
ग्राहग्रस्तेभरक्षाभिरुचितविषये सन्निधानाच्छुचित्वात्
स्तोतृणां दुःखजातं विघटयति हरिस्तीर्थपादोऽभ्यधायि ॥ ९०
शाठ्याशङ्कासहिष्णुं प्रशमितजनतागर्हणं स्पष्टरक्षं
व्याकुर्वन्तं स्वरक्षाक्रममखिलजनस्नेहितां दर्शयन्तम् ।
स्वीयाक्रन्दच्छिदोत्कं स्मरणसुविशदं विस्मयार्हर्द्धिभूतिम्
स्तोत्रे युञ्जन्तमाह स्तुतिकृदघहरं सततेऽनिष्टचोरम् ॥ ९१

॥ अथ अष्टमशतकम् ॥

श्रयाद्यैःपत्न्यादिमत्वात् रघुयदुकुलयोरुद्भवात्स्वाश्रितेच्छा-
ऽधीनेहाविग्रहत्वात् सकलचिदचितामन्तरात्मत्वभूम्ना ।
स्वामित्वा-स्वाश्रितावेद्यखिलगुणतया ज्ञानिनामप्यदुःख-
स्थानेच्छापादनाद्यैर्हरिरकथि पर दर्शनेच्छोस्सुदुस्थः ॥ ९२
तार्क्ष्योद्यद्वाहनत्वाच्छुभनयनतया नीलमेघाकृतित्वात्
आश्चर्यैश्चेष्टितत्वात् दुरवधरतया योगिभिः निर्जरैश्च ।

स्वेषु व्यामुग्धभावात्प्रतिहतिविरहाद्दुर्जनादृश्यभावा-
न्निःसङ्गानां जनानां सुलभतम इति प्राह नाथः शठारिः ॥ ९३

श्रीभूमीनायकत्वात् अरिसुकरतया कल्पसिन्धौ शिशुत्वात्
श्रीस्थाने सन्निधानात्सुरहितकरणात् श्रीनिवासत्वयोगात् ।
विक्रान्त्या विष्टपानां विधिदुरधिगमात्स्वेषु सौलभ्यभूम्ना
चैकाकी स्वाश्रितानां विहरणसमये श्रीवरः प्रत्यपादि ॥ ९४

दुर्दान्तेभेन्द्रभङ्गाच्छुभनिलयतया साम्यतश्चेतरेषां
स्वायत्तत्वेन भानात् श्रितहृदि सततं देवतद्द्वेषिसङ्गे ।
मित्रामित्रत्वयोगाज्जगदुदयकृतेः देवतात्मत्वमुख्यैः
श्रीमान् वैकुण्ठनाथःश्रितविहितसमग्रस्वभूमाऽन्वभावि ॥ ९५

आश्चर्येहान्वितत्वात् शुभमकुटतया स्वामिनाब्धौशयित्वात्
जीमूतश्यामलत्वात् श्रितसुलभतया पद्मसूर्योपमाङ्गात् ।
सारथ्यात्पाण्डुसूनोः अवनिभरहृतेरन्तरात्मत्वयोगात्
जीवापेक्षाप्रतीक्षो भवति तदवने श्रीपतिश्चेत्यभाणि ॥ ९६

भातत्वात् श्रीतुलस्या श्रितहृदिशयनात् श्रीद्धवक्षस्कभावात्
आश्चर्योपक्रियत्वात्सुरगणभजनाद्वैरिविध्वंसकत्वात् ।
गोविन्दत्वादशेषाभिमतविषयतोऽभीष्टसच्चित्तकत्वात्
सर्वाकाराद्भुतत्वात्स्वपदवितरणे रुज्ज इत्याह कृष्णः ॥ ९७

भव्यत्वाद्रक्षकत्वात् त्रिजगदधिककारुण्यतो गोपभावात्
नीलाश्माद्रिप्रभत्वात्स्वजनकृतनिजात्मप्रदानप्रभुत्वात् ।
मन्दस्मित्याश्रितत्वाद्धृदि सुकृतिषु चातर्कितानुग्रहत्वात्
स्वानां चित्तानपायात्स्वजनहृदि रतो माधवश्चेत्यवोचत् ॥ ९८

प्रासाधन्येन भानाद्धृदि च विभुतयाऽलंमहिम्ना परत्वात्
माधुर्याद्देहदेह्यादिषु च गततया स्वस्वरूपप्रकाशात् ।
अन्त्यस्मृत्याप्यभावात्स्वपरमपुरुषैक्यभ्रमध्वंसकत्वात्
ज्ञानाज्ञानप्रदत्वात्प्रकटयति हरिःपुंसि दास्यं स्वमूचे ॥ ९९

वैलक्षण्यात्स्वमूर्तेः मकुटमुखमहाभूषणैर्भूषितत्वात्
स्वार्हानेकायुधत्वात्प्रलयसलिलनियोज्जीवने कर्षकत्वात् ।
भव्यत्वाद्यैश्च सम्पन्निरवधिकतयाऽऽश्चर्यचेष्टत्वयोगात्
निष्ठां दास्ये स्वकीये प्रकटयति हरिश्चेत्यथाशायि तेन ॥ १००

व्यामुग्धत्वात्स्वकीयेष्वमलघनरुचा वामनत्वेन चाप-
द्बन्धुत्वाश्चर्यभावादहितनिरसनाल्लोकसृष्ट्यादिशक्तेः ।
अब्धौशायित्वयोगाच्छ्रितदुरितहृतेश्चातसीपुष्पकान्त्या
त्वाकृष्टेस्स्वीयदास्यावधि निगदयतीत्याह नाथः स्वदास्यम् ॥ १०१

इत्थं सूरिर्दिदृक्षोर्दृशि विदितसमयैर्निस्पृहैरेव लभ्यं
स्वानां विश्लेषभोग्यं श्रितविहितनतग्रन्थभूमिं शठारिः ।
स्वापेक्षासव्यपेक्षं स्वविततरपरं ह्रस्वतां सम्प्रपन्नं
दास्यं स्वं तस्य निष्ठां तदवधिमपि चाप्यष्टमे सोऽध्यवस्यम् ॥ १०२

॥ अथ नवमशतकम् ॥

आपद्बन्धुत्वकीर्त्या दृढमतिजननाद्दैन्यनाशाय सूनौ
जातत्वादुत्तरस्यां पुरि मधुरपदालङ्कृतायां दयाब्धेः ।
बन्धोः कृष्णस्य पादाश्रयणमिह विना नोसहायः पुमर्थो
रक्षासामर्थ्यहानेर्भवति इति हितं कारिसूनुर्बभाषे ॥ १०३

लक्ष्मीसम्बन्धभूम्ना मितधरणितया पद्मनेत्रत्वयोगात्
स्थित्याद्यैस्स्वैश्चरित्रैः स्वहृदपहरणात् श्रीगजेन्द्रावनाच्च ।
तार्क्ष्यांसौ चाधिरुह्यारिगणनिरसनाद्देवदुष्प्रापकाद्यैः
दुष्कर्मोन्मूलनाद्यैःसुचिरकृतदयो माधवश्चेत्यवोचत् ॥ १०४

नैकश्रीनामवत्त्वाज्जगदुदयसुसंस्थापनाद्यैः हरित्वात्
दानान्मोक्षस्य हेयप्रतिभटघटकश्रेणिसम्पत्तिमत्त्वात् ।
प्रह्लादाह्लादकत्वाद्वृषगिरिकटके सन्निधानादिकृत्यैः
शर्वादेस्स्वाङ्गदानादकथि यदुपतिः शीलरत्नाकरोऽसौ ॥ १०५

लक्ष्मीवक्षस्स्वभावात्स्वजनसुलभतापर्वतोद्धारणाद्यैः
दुर्ज्ञेयत्वात्सुरारेरखिलपतितया नाकिनां वृद्धभावात् ।
स्वेषां हृद्वासितायाः स्वजनवशतया तत्र चासक्तिभूम्ना
स्वस्वामित्वादिबन्धाज्जगदवति हरिश्चेत्यभाणीच्छठारिः ॥ १०६

प्राणत्वादद्भुतत्वादपि च सुविदितत्वेन भव्यत्वयोगात्
लक्ष्मीवक्षस्स्वभावाद्रघुकुलजननान्नीलरत्नाभमूर्त्या ।
कृष्णत्वादब्जदृक्त्वात्परमपतितया चेश्वरं संश्रितानां
ऊचे धीमान् शठारिः स्वगुणगरिमसंस्मारकं सर्वदर्शी ॥ १०७

आश्चर्येहान्वितत्वादखिलपतितया चान्तरात्मत्वभूम्ना
अशक्ये शक्तत्वभूम्ना जलदतनुतया भव्यताकर्षकत्वात् ।
औदार्यादेर्विशिष्टादपि च भवभृतां रक्षणे तीव्रसङ्गा-
द्विस्मर्तुं नैव शक्यो हरिरिति शठजित्कंसजेतारमाह ॥ १०८

रम्यत्वाच्छ्रीतुलस्या श्रितजनसहितत्वेन पद्माक्षतायाः
स्वामित्वात्सत्परञ्ज्योतिरितिकथनतः श्रीधरत्वातिकीर्त्या ।
पुष्पश्यामत्वभूम्ना रथचरणमुखस्वायुधत्वाद्युदन्तैः
शौरेर्धीमान् शठारिः घटकमुखसुविस्रम्भणीयत्वमाह ॥ १०९

वल्लीमध्यत्वयोगादपि च सुविदितश्रीवचोवाच्यभावात्
भूम्याद्यैश्वर्ययोगादवतरणदशासाहचर्यात्स्वभर्तुः ।
सन्धातृत्वात्सुबोधप्रददुरितहरत्वात्समासन्नभावात्
लक्ष्म्याःश्रीशं शठारिः प्रथयति च सुमज्ञानिभावेन नाथम् ॥ ११०

पद्माक्षत्वप्रसिद्ध्या जगदवनतया भव्यताद्यैश्च सार-
ग्राहित्वाद्वेणुनादैः हृषितजनतया स्वाङ्गदानादजादेः ।
श्यामत्वाद्गव्यचोरत्वत उत सरसस्मेरचेष्टत्वभूम्ना
नः कूटस्थोऽत्र सिद्ध्युन्मुखसमयतया ख्यापयामास कृष्णम् ॥ १११

सर्वश्रैष्ठ्यात्स्वकीयैरपि जगदवनादण्डपिण्डाधिपत्यात्
नीलाया वल्लभत्वादमृतवितरणाद्भक्तसुस्निग्धभावात् ।

दासानां सत्यभावादतिमृजनतया ऽथो जगत्कारणत्वात्
श्रीमान् वेलाप्रतीक्षो भवभयहरणे चेत्यभाणीच्छठारिः ॥ ११२
इत्थं सर्वैकबन्धुं चिरकृतकरुणं शीलसिन्धुं पतित्वात्
संबन्धाद्रक्षितारं स्वगुणगरिमसंस्मारकं प्राह कृष्णम् ।
विस्मर्तुं चाप्यशक्यं घटकमुखमुविस्रम्भणीयं सुमत्या
लक्ष्म्या श्लिष्टं स्वसिध्युन्मुखसमयमनेहः प्रतीक्षं सुमित्रम् ॥ ११३

॥ अथ दशमशतकम् ॥

दैत्यानां नाशकत्वाद्विधृततुलसिकामौलिभावाजयित्वात्
सर्पाधीशेशयत्वात् निरवधिकपरंज्योतिरुल्लास्यभावात् ।
लोकानां स्रष्टृभावाद्दशरथसुतताश्रान्तिहारित्वमुख्यैः
आकारैः सद्गतिः स्याज्जलदतनुरुचिस्त्वेति तेनाभ्यधायि ॥ ११४
ऊचे श्रीकेशवत्वाद्भुतचरितखगाधीशकेतुत्वयोगात्
आसन्नत्वात्पतित्वादमरपरिषदामादिभूतत्वभूम्ना ।
व्यापारैःसृष्टिमुख्यैरपि च भुजगशायित्वमुख्यैश्चरित्रैः
अध्वक्लेशापहर्ता भवति च भगवानित्यनन्यःशठारिः ॥ ११५
अम्भोजाक्षत्वकीर्त्या यदुकुलजनतया चात्मनश्श्यामलत्वात्
गोविन्दत्वात् प्रियोद्यद्वचनपरतया चक्रराजायुधत्वात् ।
श्रीनीलाश्मप्रभत्वादतिसुभगतया गोपिनिर्वाहकत्वात्
अस्थानस्नेहशङ्कास्पदरस उदितः श्रीपतिः कारिजेन ॥ ११६
श्रीमद्दामोदरत्वादमरपरिषदामप्यगम्यत्वभूम्ना
चक्राधीशायुधत्वात् वटदलशयनात् नागराजेशयत्वात् ।
वक्षःस्थश्रीमुखत्वात् परमपुरुषतामाधवत्वादियोगात्
दुष्प्रापोऽयं भजद्भिः सुगम इति हरं माधवं सोऽभ्यधत्त ॥ ११७
नाम्नां सङ्कीर्तनेन स्वपरिवृढतया भावनातोऽनुवेलं
संस्मृत्या पुष्पदानाध्ययनमुवचनैः स्तोत्रनृत्यादिकृत्यैः ।

धर्मैर्वर्णाश्रमोक्तैः बहुविधभजनप्रक्रियो दीर्घबन्धुः
श्रीमान्नारायणश्चेत्यकथयदखिलद्रामिडब्रह्मदर्शी ॥ ११८

चक्रित्वात् केशवत्वादिभिरपि च तथा श्रीशनारायणत्वात् ।
स्नेहित्वात्पाण्डवानामभिमततुलसीपूजनीयत्वभावात् ।
अम्भोजाक्षत्वगोविन्दत उत सुयशःश्रीपतित्वादिभावैः
श्रीमान् तीव्रोद्यमोऽयं स्वपदवितरणे चेति तेनाभ्यभाषि ॥ ११९

अत्याश्चर्यस्वभावात् हृदयगततया स्वस्तुतौ प्रेरकत्वात्
स्वामित्वात् सर्वभूतान्तरनुगततया स्वस्तुतौ कर्तृभावात् ।
आपद्बन्धुत्वयोगात् बहुविधसविधस्थानवत्त्वेन देवः
श्रीमानत्यादरः स्यात्स्वजनपरिकरेष्वित्यथो संजगाद ॥ १२०

लक्ष्मीकान्तत्वयोगात् त्रिपदि सवितया दिव्यदेशस्थितत्वात्
मोक्षोद्योगात्तदर्थं कृतशपथतया सर्वतस्सन्निधानात् ।
दृश्यन्तस्सन्निवासादतिवितरणतःस्वस्वभावप्रकाशात्
स्वामित्वात्तुष्यतीत्थं स्वयमनुपधितःश्रीपतिश्चेत्यगायि ॥ १२१

स्वामित्वात् श्रीशनारायण इति यशसा विक्रमाद्विष्टपानां
श्रीमत्वाच्चक्रवत्वात् जलनिधिशयनाच्चापि गोविन्दभावात् ।
वैकुण्ठस्वामिभावादपिच निजजनानर्चिराद्याख्यगत्या
स्वं लोकं प्रापयेच्छ्रीपतिरिति कथयां श्रीशठारिर्बभूव ॥ १२२

ब्रह्मेशान्तःप्रवेशात् जलनिधिसुतया सन्निरोद्धव्यभावात्
दिव्यश्रीविग्रहत्वात् अखिलतनुतयाऽतृप्तपीयूषभावात् ।
पद्माबन्धुत्वभूम्युद्धरणकरणतः पुण्यपापेशितृत्वात्
मुक्तेर्दाताऽनुभाव्यो हरिरिति शठजिद्दर्शयन् मुक्तिमाप ॥ १२३

एवं स्वानां गतिं व्यध्वजदुरितहरास्थानशङ्काहरागं
सुप्रापं भक्तिभाजां बहुविधभजनप्रक्रियं श्रीशठारिः ।
तीव्रोद्योगं स्वदाने स्वजनतनुकृतात्यादरं प्राह चान्ते
स्वेच्छातुष्टं सुखार्चिर्मुखसरणि खं मोक्षदं मुक्तभोग्यम् ॥ १२४

॥ निगमनम् ॥

इत्थं सेव्यं सुभोग्यं शुभसुभगतनुं सर्वभोग्यप्रकृष्टं
श्रेयस्तद्धेतुभूतं प्रपदनसुलभं स्वाश्रितानिष्टजिष्णुम् ।
भक्तच्छन्दानुरक्तं निरुपधिसुहृदं सत्पदव्यां सहायं
श्रीशं प्राह स्वसिद्धेः स्वयमिह करणं स्वप्रबन्धे शठारिः ॥ १२५

आद्ये स्वीयप्रबन्धे शठजिदभिदधे संसृतेर्दुस्सहत्वम्
द्वैतीयीके स्वरूपाद्यखिलमथ हरेरन्वभूत् स्पष्टदृष्टम् ।
तार्तीयीके स्वकीयं भगवदनुभवे स्फोरयामास तीव्राम्
आशां तुर्ये यथेष्टं भगवदनुभवादाप मुक्तिं शठारिः ॥ १२६

श्रीमान् सीमातिलङ्घिस्थिरतरकरुणः सर्ववित् सर्वशक्तिः
स्वामी सर्वस्य जन्तोः स्वचरणयुगळस्वीकृतास्माकभारः ।
किं नः कृत्यं स्वहेतोः किमिह न सुलभं का विपत्तिर्भवित्री
कस्यान्यस्याद्य वर्ष्या वयमिति विदुषामाह तुङ्गत्वमन्ते ॥ १२७

शास्त्रे देहातिरिक्तात्मनि तदधिपतौ तत्प्रसादाद्युपाये
तस्मान्निःश्रेयसाप्तौ तदपचरणतोऽनन्ततापाभिघाते ।
तद्भक्तानां प्रभावे तदुपसदनतः स्वान्तकालुष्यशान्तौ
सारं वेद्यं स्ववेदे सकलमकथयत् सानुकम्पः शठारिः ॥ १२८

इत्थं सत्संप्रदायक्रमसमधिगताशेषवर्णार्हवेद-
श्रद्धाशुद्धाशयानामघटयदनघं कौतुकं वेङ्कटेशः ।
सम्यक्त्वे तस्य साक्षात् शठरिपुरथवा सर्वसाक्षी स साक्षी
सावद्यत्वेऽपि सोढुं प्रभवति भजतामप्रकम्प्यानुकम्पः ॥ १२९

शोकः श्लोकत्वमभ्यागत इति वदतः शुद्धबोधार्णवोद्य-
न्नानाकल्लोलनाथानुभवरसपरीवाहतः श्राव्यवेदात् ।
वेदान्ताचार्यकश्रीबहुमतबहुविद्वेङ्कटेशोद्धृतेयं
रम्या तात्पर्यरत्नावलिरनघगुणा रञ्जनी रङ्गभर्तुः ॥ १३०

॥ कवितार्किकसिंहाय...वेदान्तगुरवे नमः ॥

## ॥ द्रमिडोपनिषत्सारः ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

सेव्यायोग्योऽतिभोग्यश्शुभसुभगतनुस्सर्वभोग्यातिशायी
श्रेयस्तद्धेतुदाता प्रपदनसुलभोऽनिष्टविध्वंसशीलः ।
भक्तच्छन्दानुवर्ती निरुपधिकसुहृत्सत्पदव्यां सहायः
श्रीमान् सर्वोचितायामुपनिषदि मितस्त्येव गाथाशतैर्नः ॥ १

आद्ये पश्यन्नुपायं प्रभुमिह परमप्राप्यभूतं द्वितीये
कल्याणोदारमूर्तेर्द्वितयमिदमिति प्रेक्षमाणस्तृतीये ।
ऐश्वर्यादेश्चतुर्थे विषमधुतुलयाऽनन्यभोग्यत्वमिच्छन्
षड्भिस्त्वां पञ्चमाद्यैरनितरगतितामाचचक्षे मुनीन्द्रः ॥ २

परं निर्वैषम्यं सुलभमपराधप्रसहनं
सुशीलं स्वाराधं सरसभजनं स्वार्जवगुणम् ।
सुसात्म्यस्वानन्दप्रदमनघविश्राणनपरं
मुकुन्दं निध्यायान्मुनिरधिजगावाद्यशतके ॥ ३

द्विकाभ्यां व्यष्टाङ्घ्रिर्दुरधिगमनीतिस्थपुटिता
यदन्त्या मीमांसा श्रुतिशिखरतत्वं व्यवृणुत ।
तदादौ गाथाभिर्मुनिरधिकविंशाभिरिह नः
कृती सारग्राहं व्यतरदिह संगृह्य कृपया ॥ ४

परत्वाद्यैरित्थं परिचरणसक्तो गुणगणैः
प्रभुं सेवायोग्यं प्रथमशतके वीक्ष्य वरदम् ।
तमेव स्वात्यर्थप्रियमथ च भोक्तुं व्यवसितो
वरेण्यत्वं तस्य प्रथमवरणीयं प्रथयति ॥ ५

द्वितीयेऽतिक्लेशक्षणविरहमुत्तुङ्गललितं
मिलत्सर्वास्वादं व्यसनशमनं स्वाप्तिमुदितम् ।

स्ववैमुख्यत्रस्तं स्वजनसुहृदं मुक्तिरसदं
स्वकैङ्कर्योद्देश्यं सुभगसविधस्थं निरविशत् ॥ ६
उपायत्वैकान्तं प्रथममिह सेव्यत्वमुदितं
ततश्च प्राप्यत्वौपयिकमतिभोग्यत्वमवदत् ।
द्वयं तत्स्वासाधारणतनुविशिष्टस्य गणयन्
तृतीये विश्वेशं शुभसुभगरूपं कथयति ॥ ७
अनीदृक्सौन्दर्यं तनुविहितसर्गादिसुभग
स्वसेवार्थाकार प्रगुणवपुषं मोहनतनुम् ।
अपश्यल्ल(भ्या)ब्धार्चाविभवमतिदास्यावहतनुं
सदा दृश्यं स्तुत्याकृतिनघविरुद्धाकृतिमिह ॥ ८
श्रियः कान्तोऽनन्तश्शुभतनुविशिष्टः फलमसौ
फलावाप्तेर्हेतुः स्वयमिति च निर्धार्य शतकैः ।
इदानीं बुद्धिस्थक्रमत इह युक्त्या मुनिवरः
फलत्वं तस्यैव द्रढयति तदन्येषु विमुखः ॥ ९
स्थिरैश्वर्यं तुर्ये सहजबहुभोग्यं निरविशत्
मिथःश्लिष्टं क्लेशावहमहिततुल्यं निजजनम् ।
कृतार्थीकुर्वन्तं प्रणयिभिषजं सद्बहुगुणं
स्वहेयस्वोपेक्ष्यं स्वमतफलमुच्चैस्स्ववगतम् ॥ १०
उपायत्वं यत्तत्प्रथमशतकेऽभाव्यत विभो-
रनन्योपायस्तद्द्रढयति परं पञ्चममुखैः ।
निरीहस्तत्रादौ निरवधिकनिर्हेतुकदया-
सरित्स्रोतःपद्मं शरणयति नाथस्य चरणम् ॥ ११
दयानिघ्नं भक्तैरघविमथनं प्रेमजनकं
जगद्रक्षादीक्षं स्मृतिजुषमहम्भावविषयम् ।
शरण्यं दीनानां स्वरसकृतदास्याभ्युपगमं
प्रचख्यौ तं प्राप्तं प्रशकनकृतं पञ्चमशते ॥ १२

अनाद्यन्तानन्दस्वरसकरुणा(कन्दजनितः )नन्द इति नः
प्रणेतुर्व्यापारः प्रपदन(विपाका)पिपासार्ह उदितः ।
तमाचार्योपज्ञं चिरवि(रहि)घटितस्वात्मघटन-
स्फुरच्छक्तिं षष्ठे मुनिरशरणो याति शरणम् ॥ १३

गुरुद्वारोपेयं स्वयमभिमतं वैरघटकं
चरित्रैः कर्षन्तं परविघटनं स्वान्वितहरम् ।
निदानं धृत्यादेर्घटकवशभूतिद्वयमगात्
अनर्हद्वैघस्थ्यं त्वविकलशरण्यस्थितिमिह ॥ १४

तदेवं षष्ठान्तं विहितसविशेषप्रपदनः
फलालाभात् खिन्नस्त्वरितहृदयस्सप्तमशते ।
अनिष्टोपन्यासप्रभृतिभिरनिष्टप्रशमने
स्वतस्सिध्यच्छीलं प्रभुमभिमुखं संमुखयति ॥ १५

सहन् शाठ्याशङ्कामुपशमितगर्हः प्रकटयन्
स्वगोप्तृत्वं गुप्तिक्रममखिलजन्तुप्रणयिताम् ।
श्रिताक्रन्दच्छेत्तास्मरणविशदश्चित्रविभवः
स्तुतौ युञ्जन् स्तोत्रव्यसनजिददर्शी प्रभुवरः ॥ १६

अथानिष्टान् पुंसां स्वयमुपजिहीर्षन्नपि विभुः
तदिच्छां बाह्येषु प्रशमयितुकामः क्रमवशात् ।
निजेच्छासंसिद्धत्रिविधचिदचिद्वस्तुविततिः
श्रितेच्छावैचित्रीवश इति वदत्यष्टमशते ॥ १७

दिदृक्षायां दृश्यः प्रभुरगणि निस्सङ्गसुलभः
स्वविश्लेषैकान्तः श्रुतिविहितपौष्कल्यविभवः ।
अपेक्षासापेक्षस्ववितरणसज्जो हृदि रतः
स्वदास्यं तन्निष्ठां तदवधिमपीह प्रकटयन् ॥ १८

अभीष्टं विश्वस्मिन् विषमफलकांक्षिण्यविषमम्
प्रयच्छन्तं दृष्ट्वा परमपुरुषार्थैकरसिकः ।

निरस्तान्यापेक्षो निखिलजगदीशस्य नवमे
　निदानं सिद्धीनां निरुपधिसुहृत्त्वं गणयति ॥　१९
अभाव्येको बन्धुश्चिरकृतदयश्शीलजलधिः
　स्वसंबन्धात् गोप्ता स्वगुणगरिमस्मारणपरः ।
अशक्यो विस्मर्तुं घटकमुखविस्रम्भविषयान्
　सुमज्ञानिस्सिद्ध्युन्मुखसमय इच्छन्नरसरम् ॥　२०
उदन्तैरित्येवं निरुपधिकसौहार्दपिशुनैः
　उदन्यामुद्वेलामुपजानितवन्तं निजपदे ।
त्रिवर्गातिक्रान्तस्थिरनगरघण्टारथगतेः
　सहायीकुर्वाणश्श्रमशतके विन्दति मुनिः ॥　२१
गतिं व्यध्वक्लेशच्छिदमपि च शङ्कास्पदरसं
　भजद्भिस्सुप्रापं विविधभजनप्रक्रियमिह ।
फले तीव्रोद्योगं स्वविषयकृतात्यादरमगा-
　द्यदृच्छातुष्टं सम्सरागिमपुनर्जन्मसरु(ह)जम् ॥　२२
परं प्राप्यं पश्यन् परिचरणहेतुं विगणयन्
　परिष्कुर्वन्नाज्ञामनितरशरण्यश्शरणयन् ।
अनिष्टप्रध्वंसप्रभृतिषु निदानं च कथयन्
　मुहुर्देवं लक्ष्म्या सहितमिह भेजे मुनिवरः ॥　२३
पुरा शोकश्श्लोकोऽभवदिति नयादित्युपनिषत्
　मुनेः पुण्यश्लोकादजनि वरभक्तैः परिणतिः ।
व्यपोह्य स्वं भावं हरिचरणसन्तानकलिकां
　अपीक्षद्योगी यस्तनुमतनुकारुण्यविवशः ॥　२४
सतामित्थं सारं द्रमिडनिगमस्यान्वकथयत्
　बहूनां विद्यानां बहुमतिपदं वेङ्कटपतिः ।
दिशासौधश्रेणीदृढघटितजैत्रध्वजपटी
　परामर्शभ्रश्यत्प्रतिमतनिराबाधनिगमः ॥　२५

मनुव्याससप्राचेतसपरिषदर्हा क्वचिदियं
सुधासिक्ता सूक्तिः स्वयमुदयमन्विच्छति जने ।
निरुन्ध्युः के विन्ध्याचलविकटसन्ध्यानटजटा-
परिभ्रान्ता पङ्गोरुपरि यदि गङ्गा निपतति ॥ २६

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्तचार्यकृतिषु

द्रमिडोपनिषत्सारः समा ः ॥

## किंगृहेशस्तुतिः ॥

श्रीमान्वेङ्कटनाथार्यः—सन्निधत्तां सदा हृदि ॥

अयत्नसङ्कलितसर्वलोक(सर्गोपसर्ग)सर्गापवर्गस्थितिसंविधानम् ।
अनादिमध्यान्तमशेषनाथं किंगेहनाथं शरणं भजामि ॥ १

अकृत्रिमानां वचसामभूमिमगोचरं ब्रह्मशिवादिवाचाम् ।
अहं स्तुवे किंगृहनायक त्वां तथा ह्यजल्पन् स्तु मितंपचोक्तिः ॥ २

अकिंचनोऽनन्यगतिस्त्वदीय स्तुतिं करोमीति मतिं करोमि ।
कृपानिधे किंगृहनायकाद्य त्वमेव मे वाचमुदीरयेथाः ॥ ३

त्वयैव दत्तामुपलभ्य वाणीमणीयसीमप्रतिमप्रभावम् ।
प्रसादये किंगृहनायक त्वां न चेत् कुतो मे सफलं वचस्स्यात् ॥ ४

अनेन जीवेन समस्तवस्तु प्रविश्य नामानि च रूपभेदैः ।
व्याकृत्य वीक्षावनमध्यभागे विभुं शयानं सततं भजामि ॥ ५

अशेषपुंसां हृदि सन्निविष्टमनल्पशक्त्यादिगुणैः विशिष्टम् ।
हृत्तापहृत्पङ्कजभृङ्गजुष्टं देवं भजे किंगृहगं ममेष्टम् ॥ ६

श्रीशालिहोत्रार्पितशालिपिष्ट हृष्टोभवान् देवशयिष्णुरेनम् ।
किं गेहमत्रेति यदोऽवदत्तत् किं गेहमासीत् तवसद्मनाम्ना ॥ ७

पद्मामहीलालितपादपद्मं पद्मासनाधिष्ठितनिम्ननाभिम् ।
शयानमाक्रम्य भुजङ्गतल्पं किंगेहसद्मानमहं नतोऽस्मि ॥ ८

विस्मेरमासीत् भुवनं त्वदीयचरित्रमन्वीक्ष्य चिरप्रवृत्तम् ।
किंगेहनाथासुरकैटभादि निबर्हणार्थं किल सर्वशक्ते ॥ ९

गङ्गादितीर्थानि निषेव्यशम्भुः सर्वाणि पुण्यायतनानि गत्वा ।
अमुक्तपूर्वोविधिहत्यया त्वां संसेव्य किंगेहपते विमुक्तः ॥ १०

अजन्हुजानोद्य महापराधं द्विजं हि हृत्तापहरं सरस्ते ।
अतीतरत्कौशिकमद्भुतं त्वत् प्रभावतः किंग्रहनाथ नैतत् ॥ ११

रघुप्रवीरस्य तवार्हमेतत् यदागतस्यैव रिपोर्जिघांसोः ।
विधूय रक्षस्त्वममुष्य दिव्यमदाः पदं किंग्रहनायक त्वम् ॥ १२

पिष्टप्रदीपान् परिकल्प्य ये त्वां हृष्टाभजंतेऽहनिपुष्यदर्शे ।
इष्टप्रदायी वितनोषि तेषां कष्टोपनोग्यान्यपि कांक्षितानि ॥ १३

विकासयन् मानसपङ्कजानि विपश्चितां निश्चलभक्तिभाजाम् ।
प्रादुर्भवन्नासुरकैटभादि तमोरवेत्वं मयि सुप्रसीद ॥ १४

प्रद्युम्ननाम्नि तपसां हि धाम्नि कृपाप्रसन्ने त्वयि किंग्रहेश ।
गङ्गाधिकत्वं न किमापतीर्थे हृत्तापहं वा तनयं न वन्ध्या ॥ १५

त्वं सर्वविस्त्वं कमलासहायः त्वमेव वेदांतवचो विचेयः ।
भवन्तमेतं शरणं प्रपन्ना वयं नयस्मात्परमस्ति दैवम् ॥ १६

पुराणपुंभावमहो विगूह्य युवत्वमेवाकलयन्सुरूपम् ।
उपायमस्त्वं किल धर्मसेनसुतांनताङ्गीमिह किंग्रहेश ॥ १७

श्रीभूमिलालितपदंश्रितशेषतल्पं कल्पान्तयोग्यभुवनावनयोगनिद्रम्
श्रीशालिहोत्रशिरसाधृतहस्तपद्मं श्रीवीरराघवविभुं श्रयतां मनोमे ॥ १८

वेंकटेशकविना विनिर्मितां किंग्रहाधिपति संस्तुतिं पठन् ।
दिव्यभोगमुपभुज्य मानवो भव्यरूपमवलोकयेत् प्रभोः ॥ १९

कवितार्किकसिंहाय कल्याणगुणशालिने ।
श्रीमते वेङ्कटेशाय वेदान्तगुरवे नमः ॥

इति कवितार्किकसिंह सर्वतन्त्रस्वतन्त्र वेदान्ताचार्यकृतिषु
किंग्रहेशस्तुतिः संपूर्णा ॥

# ॥ शुद्धिपत्रम् ॥

## ॥ द्वितीयभागः ॥

| पुटः | पंक्तिः | शुद्धपाठः |
|---|---|---|
| १ | २ | निगमान्त |
| १ | १८ | वक्रो |
| २ | १० | त्वाम |
| ५ | ५ | विधेया |
| ,, | १२ | विष्णु |
| ६ | १० | स्थिरज्योतिः |
| ७ | ,, | कबुरे |
| ,, | १३ | त्म्यः |
| ,, | २५ | प्रयुक्ता |
| ९ | १८ | सहमानः |
| १० | ७ | मोक्षं |
| ,, | १५ | सीमान्तः |
| ,, | २३ | स्थितं |
| ११ | २१ | परिहासिन |
| ,, | २५ | कौस्तुभ |
| ,, | २३ | प्पमुहाणं |
| ,, | २६ | वत्सं |
| १२ | ८ | बुद्बुद |
| १३ | २१ | सदृक्षा |
| १४ | ४ | सत्य |
| ,, | ,, | येषां |
| ,, | १७ | णिखण्डिअ |
| ,, | २३ | पदाम्बुजं |
| १५ | १४ | णअरेन्द |
| ,, | २१ | भक्ता |
| १५ | २२ | मच्युत |
| १६ | ७ | तिमिरे |
| ,, | १३ | सुलहं |
| ,, | १५ | सुलभं अच्युत |
| ,, | १६ | मुक्त्वा |
| ,, | १७ | पसुसमा |
| १७ | २१ | सकलंच |
| १८ | १६ | यौवन |
| ,, | २० | न खलु |
| १९ | २३ | तिहुवण |
| ,, | २५ | कान्त |
| २२ | १ | सोहं |
| ,, | १४ | भूषिताग्रां |
| २३ | ५ | विबुधैक |
| ,, | १६ | नृपमा |
| ,, | १८ | न्यूर्मीन |
| २६ | १३ | दर्शिताभीष्टदानः |
| २७ | २१ | मूढमतयो |
| २८ | १६ | सौदामिनी |
| ३० | ७ | प्राचीन |
| ,, | १४ | स्थूलस्थूला |
| ३१ | १७ | ईश्वरत्वं |
| ३१ | २१ | तटस्पर्शि |
| ३२ | १२ | हारावलि |
| ,, | १७ | पमर्दसह |

| पुटः | पंक्तिः | शुद्धपाठः |
|---|---|---|
| ,, | २३ | समुन्नमिता |
| ,, | २६ | ताम्रेण |
| ३२ | ,, | वण्टापथं |
| ३३ | १ | वलोऽप |
| ,, | २ | भजन् सः |
| ,, | ४ | स्त्वं |
| ३३ | १५ | दयाद्र |
| ,, | १७ | वावदूकः |
| ,, | २२ | देहलाश |
| ३४ | ७ | प्रथितास्सं |
| ,, | ,, | कल्लोलान् |
| ,, | ८ | वर्गविधान |
| ३५ | १० | नीत |
| ,, | १८ | लूखल |
| ,, | १९ | निगमः |
| ३७ | १७ | नृसिंह |
| ,, | २३ | प्रथमिका |
| ,, | ,, | मिथः |
| ३८ | १ | सरभसा |
| ४१ | ६ | माधवि |
| ,, | ८ | विश्रान्ति |
| ४२ | १३ | निस्संशये |
| ४३ | ५ | विन्देक्षणा |
| ,, | ६ | मङ्गला |
| ,, | १० | कामस्स |
| ४४ | १७ | वरपतिः |
| ,, | १९ | हित्वा |
| ,, | २० | मारचयान्ति |

| पुटः | पंक्तिः | शुद्धपाठः |
|---|---|---|
| ४५ | १ | पदेन |
| ,, | ९ | रुचिरया |
| ,, | ११ | कमल |
| ,, | १२ | मान्या |
| ,, | ,, | महीक्षित |
| ,, | १० | आसीद |
| ४५ | १९ | गोप्त्रा |
| ,, | २० | वर्धयति |
| ,, | २१ | चारुकल्हार |
| ४६ | १३ | निवर्त्य |
| ४७ | १५ | रहितान् |
| ,, | १७ | भक्तिः |
| ४८ | १० | णस्त्वम् |
| ,, | ११ | निरपेक्षम |
| ,, | १९ | त्तव |
| ४९ | ९ | युरवधीन् |
| ,, | ११ | दशीतकर |
| ,, | १२ | सौदामनी |
| ,, | २३ | पवृत्त्यनु |
| ,, | ,, | निजरव |
| ,, | १४ | साम्यं |
| ,, | १५ | त्वात्किंकरत्व |
| ,, | १६ | त्वयाऽहं |
| ,, | १७ | पद्मामही |
| ,, | ,, | परिभुक्त |
| ,, | १९ | तत्त्वानि |
| ५० | २ | वीक्ष्यः |
| ,, | ३ | ननन्तान् |

| पृष्ठ: | पंक्ति: | शुद्धपाठ: |
|---|---|---|
| ,, | १६ | इव |
| ,, | २५ | त.भिस्त्र:ान |
| ५१ | १२ | वेत्यात्मानं |
| ५२ | १२ | निर्भयो |
| ५३ | ६ | समयनिय |
| ,, | २३ | तत्त्वतशिक्ष |
| ५४ | ११ | इदृशोपदश |
| ५५ | २२ | सिद्धम् |
| ५७ | २० | यापायमं |
| ५८ | १२ | अनेकार्थं |
| ,, | १६ | प्रथममथ |
| ६० | २० | माष्यम् |
| ६१ | ११ | त्युक्तं |
| ६४ | १ | महदच्छटां |
| ,, | ४ | वाह्य |
| ,, | २६ | विविधड |
| ६५ | ५ | प्रपदन |
| ,, | ११ | फलति |
| ,, | २६ | चिन्तामदुरा |
| ६६ | ८ | लुब्ध |
| ,, | ,, | जुषेथा |
| ,, | १३ | त्तावसाना |
| ,, | १५ | तनुभृतां |
| ,, | २६ | श्लिष्टाश्लिष्ट |
| ६७ | १० | यदायत्तं |
| ,, | १३ | समुद्धताः |
| ६८ | २० | षोडशा |
| ६९ | ६ | जयजय |
| ,, | ७ | निरुपध |
| ७० | ४ | माननोतु |
| ७० | १७ | घोणारवै |
| ७१ | १० | तन्वीत |
| ,, | ११ | पत्तन |
| ७३ | २० | शमयासि |
| ७४ | ४ | प्रसात्ति |
| ,, | १४ | मुपाश्रितो |
| ७६ | २० | दृष्टिं |
| ७७ | १३ | निरंकुशप्र |
| ,, | १५ | मुपाधि |
| ,, | १६ | वृषभ |
| ७८ | २ | परिपाक |
| ,, | ६ | सर्वद्रष्टा |
| ,, | १० | शृङ्गारिकरूप |
| ,, | २० | ६६ |
| ८० | १ | भूति |
| ,, | २४ | खिलावग्र |
| ८१ | १ | चित्रतां |
| ,, | १० | समुदिताकृ ति |
| ,, | १७ | अलिप्सथा |
| ८२ | २४ | न्यसना . |
| ८३ | ६ | निर्वहणा |
| ८४ | ६ | शमनं |
| ,, | ,, | देवतानां |
| ८५ | २६ | वेङ्कटेशेन |
| ८६ | ४ | तार्किक |
| ८७ | २६ | मार्थविन्नियत |

| पुट: | पंक्तिः | शुद्धपाठः |
|---|---|---|
| ९० | ८ | शमय |
| ,, | १७ | णप्रथित |
| ९१ | ७ | कोसल |
| ,, | ११ | जहदुपल |
| ,, | ,, | ममुनि |
| ,, | १२ | चकोरचन्द्र |
| ९३ | ५ | परिचरण |
| ,, | १७ | कटकं |
| ९४ | ११ | वर्धिनी |
| ,, | १३ | भगवती |
| ,, | १८ | भाव |
| ,, | ,, | वाऽपि |
| ९५ | ४ | सेवापेक्षा |
| ,, | ,, | नस्यात् |
| ९६ | ६ | मधुरता |
| ,, | ७ | हारि |
| ९७ | ८ | स्रग्विण |
| ,, | १३ | जाता |
| ९८ | १ | गरुडपक्षा |
| ,, | ११ | कल्पमानं |
| ,, | २१ | बर्हि |
| १०० | १२ | ब्रह्म |
| १०१ | १४ | युयुत्सुः |
| १०२ | २० | |
| १०३ | ११ | आवेध |
| ,, | १२ | बन्धं |
| १०४ | १७ | भुजग |
| १०५ | ३ | नमिषा |
| ,, | ११ | स्वैरनिद्रा |
| १०७ | ८ | मलमल्लक |
| ,, | ९ | णापाटना |
| ,, | १० | समाराधनं |
| ,, | १२ | तदञ्जनाभं |
| ,, | १४ | रचना |
| १०७ | १५ | निश्चिनुमंह |
| ,, | १७ | कृपीट |
| ,, | ,, | भवज्वाला |
| ,, | १८ | तृणमपि |
| ,, | ,, | परिमल |
| १०८ | १७ | प्रणामं |
| १०९ | १२ | चरणौ |
| ११० | ८ | प्रथयति |
| ,, | ९ | विनय |
| ११० | २४ | यतिराज |
| ११८ | १२ | स्पष्टम |
| ११९ | ४ | सर्वेष्वा |
| ,, | १३ | वृत्तीन |
| १२० | ५ | र्यन्तेऽके |
| १२१ | ५ | प्रह्लादा |
| ,, | २५ | श्रद्धेय |
| १२२ | १५ | त्रिनेत्र |
| ,, | ,, | [illegible]नुतं |
| १२६ | २ | मतुलमत्रै |
| १२७ | ६ | स्वाना |
| १३१ | १४ | तीर्थपादैः |

| पुटः | पंक्तिः | शुद्धपाठः |
|---|---|---|
| १३१ | २४ | रकथि परं |
| १३२ | १३ | बाष्टु |
| १३५ | १९ | श्रीनीला |
| ,, | २१ | राजे |
| ,, | २२ | माधवत्वा |
| १३६ | २१ | पापशितृत्वा |
| ,, | २५ | श्रीशठारिः |
| ,, | २६ | सत्त्व |
| १३७ | ३ | प्रकृष्ट |
| ,, | ४ | प्राह |
| ,, | ७ | स्वकीयां |
| ,, | २६ | गुरवे |
| १३८ | १३ | निध्यायन् |
| १४१ | ४ | स्वगुण |
| ,, | २२ | अपिश्च |
| १४२ | ५ | कल्याण |
| .. | ८ | समाप्तः |
| १४३ | १३ | असोऽवदत् |